# विंशशताब्दिकं संस्कृत-नाटकम्

रामजी उपाध्यायः
एम ए, डी फिल, डी लिट्
सागर-विश्वविद्यालये
सस्कृत-विभागस्य प्राध्यापकाध्यक्ष

प्रकाशकः
संस्कृत-परिषद्, सागर-विश्वविद्यालय
सागर

# भूमिका

विंशशताब्दिक संस्कृत-नाटकमिति न केवलमसंस्कृतज्ञानामपि तु संस्कृत-विदामपि किञ्चिदाश्चर्यपदं वृत्तम्। कार्पण्यमेतत् पुराण-परायणानां पण्डितानां ये केवलं प्राचीनमेव संस्कृत-साहित्यं बहुमन्यमानाः परवर्तिसंस्कृत-साहित्य-मस्पृश्यमिवोपेक्षन्ते। तथापि संस्कृत-समाजे यथोचितं सम्मानमलभमानमपि आधुनिकं संस्कृत साहित्यं विंशशताब्देऽपि नित्यमेवानवरुद्धं प्रचीयमानं प्रतीयते। तत्र काचिद् दैवी प्रेरणैव कारणं प्रतिभाति। विंशशताब्देऽद्यावधि प्रायशः सहस्रप्रायाणि नाटकानि विरचितानि स्युः। तेषु त्रिशती मम हस्त गता भवद्भ्यो निवेदितास्मिन् प्रकरणे।

अस्ति काचिदावश्यकताधुनिक-संस्कृत-साहित्यस्य? किन्नाम प्रादेशिक-भाषया राष्ट्रभाषया हिन्द्या वा साहित्य-विरचनं न पर्याप्तम्? अस्ति किञ्चिद् वैशिष्ट्यं संस्कृत गर्भपरिपोषित-भावसमुद्रकस्येत्येते प्रश्नाः प्रासङ्गिका विमर्शा-र्हाश्च। नास्ति कापि आवश्यकताधुनिकयुगे संस्कृतेन साहित्य-रचनाया इति बहुशः संस्कृतविदोऽपि प्रवदन्ति, यतो हि नाम लोके संस्कृतं साधारण-जनानां भाषण-सम्भाषणयोर्भाषात्वेन न प्रयुज्यते। तेषां मुखमुद्रणाय सुविदि-तमेतत् सत्यमुद्घाटनीयं यत् भारते कस्मिंश्चिदपि प्राचीनयुगे संस्कृतं साधारण-जनानां भाषण-सम्भाषणयोर्भाषात्वेन न प्रायुज्यत। प्राचीनकालेऽपि देशस्य नवतिः प्रतिशतं प्राकृतजनाः सदैव प्राकृतभाषां व्यवहरन्ति स्म। तेषां कृते कतिपयेषु युगेषु बौद्धजैनादयः कवयः संस्कृतं परित्यज्य प्राकृतभाषाभिर्बहु साहित्यमग्रन्थयन्। तदधुनापि जीवति। किन्तु तेऽपि बौद्धजैनादयोऽनुपद

प्राकृतभाषाणा कामपि त्रुटि वाभाव वा परिलक्ष्य प्राकृताग्रह शिथिलीकृत्य पुनः पुनः सस्कृतेनाधिकतर विरचितवन्तः।

अपर च, भारतस्यैक्यमनादिकालात् सस्कृतेन ससाधितम्। सास्कृतिक-दृष्ट्या आकश्मीरात् सागरपर्यन्तमखिल भारत वेदपुराण-स्मृतिषु परिहितमेक शरीरमेव। तत्सस्कृत परिधान पुराणमपि नित्य नवं नव रोचते इति सुष्ठु प्रोच्यते। तथापि नूतन-भावद्रव्येणाञ्चित नव्य साहित्य-सुवसनमस्माक गौरवायेति निश्चप्रचम्।

आधुनिकयुगे साधारणतः सर्वाः प्रादेशिकभाषा विशेषतो हिन्दी वैदेशिकीं रीतिमनुसृत्यात्मान विकासयन्ति। भारते केवल सस्कृत-भारती एव भारतीया ज्ञान-विज्ञानमयीं सास्कृतिकधारामधुनापि प्रवाहयति। तेषु सस्कृत-पदेषु सस्कृतवाक्यरचनालङ्कारादिषु च काचिद् दिव्या शक्तिः राजते, यया भारतीय सनातनमौदात्त्य सरक्ष्यते। इयमेव हि सस्कृतस्यानन्योपलब्धिः। नान्यथा देशेऽस्मिन् लोकसग्रहो जायेत, विश्वगुरुत्वं चोत्पद्येत।

आत्मकल्याणस्य लोककल्याणस्य च दिव्या वाग्धारा यथा बृहत्तर विश्वमानवता चावगाहनेन परिपावयेत्तथा प्रयतनीय भवद्भिरिति प्रार्थयते।

रामनवमी, वि० स० २०३५ **उपाध्यायो रामजी**

# विषयानुक्रमणिका

## विंशशताब्दिकं संस्कृतनाटकम्

## पार्थपाथेयम्

काशिराजस्य प्रभुनारायणसिंहस्य पार्थपाथेयं नामोपरूपकं सहृदयो-ह्लाप्यं वर्त्तते। तस्य शासन-समयः १८८६ खीष्टाब्दतः १९३१ खीष्टाब्दं यावत् वर्तते। वामाचरण-भट्टाचार्यानुसारं लेखकः शान्तमूर्तिः, सनातनधर्मस्य मूर्त्तरूपः, स्थविरोऽपि तरुण इवाध्यवसायशीलश्चासीत्। काव्य-प्रणयने शास्त्रार्थ-पारावारावगाहने च समानमेवासीदस्य पाटवम्।

कथानुसारं सुभद्रार्जुनं प्रति निबद्धानुरागाभवदित्यर्जुनोऽपि न जानाति। सुभद्रार्जुनस्य चित्रं रचयन्ती सती मनो मोदयते स्म। चित्रस्याधस्तान्निखितं तया पद्यमिदं प्रसिद्धमेव—

अशक्नुवन्ती परिवोढुमात्मना भरं चलन्मानसगूढरागिणी।
प्रवर्धमानार्जुनमारुरुक्षते यदुन्मुखी तिष्ठति माधवीलता॥

तत्सहचरीविरचितमर्जुनस्य चित्रान्तरं नारदप्रेरितेनानुचरेण केनचिद् अर्जुनाय समर्पितम्। तच्च द्रौपदीहस्तं गतम्।

नारदोऽचिन्तयद् यत् कृष्णेनोलूपीप्राप्तिप्रसङ्गे मदनुगृहीताप्सरसा-मुद्धारोऽपि कर्त्तव्यः। युधिष्ठिरसभामागत्य नारदो युधिष्ठिरं प्रत्याह—भाविकलह-निवारणाय भवद्भिर्नियमो विधेयो यदस्माकं सर्वेषां पत्नी द्रौपदी केनचिदेकेन पत्या वर्षमेकं सहवासं कुर्यात्। ततोऽन्येन। एवं क्रमेणैकेन पत्या साकं निवसन्ती सा पत्यन्तरेण न द्रष्टव्या। विपरीता-चरणेऽभियुक्तो द्वादशवर्षाणि यावद् ब्रह्मचारी भूत्वा भ्रमेद् वनाद् वनान्तरम्।

एकस्मिन् दिवसे चौरेण नीयमानां ब्राह्मणधेनुं रक्षितुकामोऽर्जुनो गाण्डीवार्थं युधिष्ठिरकक्षं प्राविशत्, व्यलोकयच्च द्रौपदीं युधिष्ठिरेण सह। समयानुसारमर्जुनो वनगमनाय समुद्यतो बभूव। तदा द्वारकातः पत्रमेकं प्राप्तं तेन। पत्राचारो ब्रह्मचारिणा कृते न शोभनीय इति पत्रमपठित्वैव वनं निर्जगाम।

गङ्गाद्वार लब्ध्वासौ यावदेवावगाहनार्थं नद्यामवतरति तावदेव कयाचित् तरुण्या जलान्तर एव गृहीत. सन् क्रन्दितुमारेभे। पश्चाच्च रहस्यमिद प्रकाशमागतम्।

समयान्तरे पार्थ उलूप्या निहितानुरागो जात । तयोस्तत्र गान्धर्व-विवाह सवृत्त'। उलूपी च प्रसवार्थं पितुर्गृह गता।

कस्मिश्चिद् दिने चित्राङ्गदा नाम नायिका तत्राजगाम। अर्जुन-स्तस्या दर्शनेनासक्तोऽभूत्। तस्या पितुश्चित्रवाहनस्यानुज्ञया तयो-र्विवाह समपद्यत।

चित्राङ्गदा पुन सयोगेनाश्वास्यार्जुनो भ्रमन् पुनरपि द्वारकान्तिक ययौ। तत्र स्नानार्थं मुनिजलाशयावतीर्णोऽसौ वर्गा नाम काञ्चिद् रमणी व्यलोकयत्। ग्राहरूपिणी सार्जुनचरण स्पर्शमात्रेणैव स्त्रीपद प्रापिता। वर्गा कुबेरस्य दास्यासीत्। तया स्वस्य स्वसहचरीणा चाप्सरसा ग्राहरूप-प्राप्ति-कथा निवेदिता।

अचिरमेवार्जुनस्ता सर्वा उद्धृतवान्। ततोऽसौ प्रभासतीर्थं प्रतस्थे। पुन. कृष्णेन सह स द्वारका जगाम। पाण्डव विलोक्य माधवस्य भगिन्या सुभद्राया मनसि स्नेहाङ्कुर आविर्बभूव। अर्जुन पतिरूपेण प्राप्तु सा दुर्गा पूजयतिस्म। दुर्गयाभीष्ट तस्या अपूरयत्।

कृष्णेनैकस्मिन् दिने सुभद्रार्जुनयो रहसि परस्परावलोकनाय सयोग उपस्थापित । तत्रैवार्जुनेन द्रौपदीप्रेषित प्रेमपत्रमासादितम्।

सन्ध्यासमये गृह प्रति प्रस्थिताया सुभद्राया कर धृत्वार्जुनेनेद निगदितम्—

विलङ्घ्य शून्या विदिशा विचिन्वती यदर्थमेव करभोरु कम्पसे।
नितान्तहार्देन गतो विधेयता ददाति तुभ्य स करावलम्बनम्॥

बलराम' सुभद्राया पार्थस्यानुरागमशोभन मेने। स मुसलमुद्यम्य तं प्रहर्तुमियेष किन्तु कृष्णेन स निवारित'।

उपरूपकेऽस्मिन् त्रयोऽङ्काः। विदूषकस्य हास्यप्रवृत्तिविलक्षणैव वर्त्तते। रङ्गमञ्चे नायकभूतस्य पात्रस्य प्रत्येकमङ्के उपस्थितिर्नास्ति। नैतद् भारतीयम्।

प्रथमेऽङ्के सुदूर यावत् केवल विदूषकस्य स्थिति नाट्यनियमोल्लङ्घन व्यनक्ति। दौवारिकोऽपि तत्रैवागत्य ब्रवीति—

'दैवात्त्यक्तपुन प्रसक्तविभवा पार्थो सुख शेरते'।

अर्थोपक्षेपकस्य कार्यं तस्मिन्नेवाङ्के पत्रेण निर्व्यूढम्। उपरूपकमिदं मनोरञ्जननिर्भरमेव। तत्र गीताना सम्भारोऽतीव रोचकोऽस्ति। नायिकोल्लूपी गायति—

'रुचिरशुचिनखे, पाटलापत्रपुष्प पवित्राङ्गुलीभिश्च खर्जुरगुच्छम्। इत्यादि।

तृतीयेऽङ्के दूरस्थाना स्थलाना घटना समाविष्टा'। यद्यपि दृश्याना विभाजननिर्देशो नास्ति तथापि तत्र बहूनि दृश्यानि स्पष्ट प्रतीयन्ते। क्वचित् भावानुकारि-शब्दानां सुष्ठु प्रयोगोऽपि रमणीयतामादधाति। यथा—

१—अले भाइओ धडफडेदि मह जीओ।

२—ही ही इदो झणज्झणन्द वणसद्दो।

३—दुन्दुभी ठठणाअदि।

अनेकत्र वाराणसेय शब्दावली शोभते।

## हरिदाससिद्धान्तवागीशस्य नाट्यसाहित्यम्

खीष्टाब्दे १८७६ फरीदपुरमण्डले लब्धजन्मा हरिदाससिद्धान्त-वागीशो भारतवर्षस्य स्वातन्त्र्यमुद्गायन् विशिष्ट एव। अस्य माता विधुमुखी पिता च गङ्गाधरविद्यालङ्कार आस्ताम्।

अय बाल्यत एव महाकविरासीत्। पञ्चदशवर्षीय एवासौ कसवध-प्रभृतीना ग्रन्थाना प्रणयनेन लब्धादरोऽभवत्। कवेरस्य सुप्रसिद्धनाटकेषु विराजसरोजिनी, मिवारप्रताप, शिवाजीचरित, वङ्गीयप्रतापश्चेति सुप्रसिद्धानि। अनेन रुक्मिणीहरणप्रभृतीनि पद्यकाव्यान्यपि लिखितानि।

अस्य हिन्दुत्वाभिमान प्ररोचकमथ च याथार्थ्यं दृश्यते यथा—

हिन्दूरेव हि हिन्दूना विकृत कुरुते क्षतिम्।
मुद्गरीकृतलौह हि लौह दलति शाश्वतम्॥

मिवारप्रतापम् ३.१८

एव मिवारप्रतापस्य पञ्चमेऽङ्केऽपि 'हिन्दुभिरेव हिन्दूना हिसया सवृत्तोऽय सर्वनाशो भारतस्य'।

मिवारप्रतापम्

मिवारप्रताप नाम नाटक १६४४ खीष्टाब्दे विरचितम् । अस्य प्रथमोऽभिनयो १६४५ खीष्टाब्दे कलिकाता-नगरे स्टाररङ्गमञ्चे समभूत् ।

प्रस्तावनाया सूत्रधार' सस्कृतभाषाया अमरताविषये स्पष्टयति—

वेदादि शास्त्र-निचय-स्फुट-दिव्यमर्ति ,
सा वाक् किमन्यवचनादमरा म्रियेत ।
मध्याह्नसूर्यकरणो हि यदि ब्रवीति
रात्रि· किलेयमिति हन्त स एव मूढ' ।।

कथानुसार मानसिहो राणाप्रतापस्य गृहमागच्छति पङ्क्तिभोजनार्थं च निवेदयति । नानुमतोऽय प्रस्ताव प्रतापेन । तिरस्कारजनितक्रोधान्धेन मानसिहेन सपद्येव प्रतिज्ञातम्—

यद्यमुष्य प्रतीकार न कुर्यां वीर्यवानपि ।
तदाम्बर न यास्यामि यास्याम्यम्बरता पुन ।।

मानसिहस्य प्रस्थानानन्तर प्रतापेनानुमित यदकबरस्याक्रमणमासन्नमेवारित । प्रतिक्रियार्थं सन्नद्धोऽय वीरान् सम्बोधयति ।

द्वितीयाङ्के महिलासम्मेलन वर्त्तते । सौन्दर्यप्रतियोगिताया मुगलराज्य' सुन्दरीभ्य' पुरस्कारान् वितरयिष्यन्ति । प्रतियोगितायां पृथ्वीराजस्य पत्नी कमला सम्राजोऽकबरस्याज्ञया समागता । मार्गे मुगलोद्यानस्य पालिका कमलामकबरहस्तपाशबद्धा विधातु प्रयत्नशीलासीत् । कमला कथमपि शस्त्रसाहाय्येन गृह परावर्तत ।

तृतीयेऽङ्के मानसिहेनाकबरो राणाप्रतापकृतापमानविषये निवेदित: ।

चतुर्थेऽङ्के हल्दीघाटीस्थाने सञ्जातस्य सङ्ग्रामस्य वर्णन विद्यते । अस्यैव गर्भाङ्के शक्तसिहार्पित तुरङ्ग साहाय्येन प्रतापस्य प्राणरक्षा वर्णिता ।

पराजयानन्तरं प्रतापो मिवारशैलस्य पर्णकुटीरे सपरिवारो न्यवसत् । एकस्मिन् दिवसे वनमार्जारो तस्य कन्यकाया' करात् रोटिकां गृहीत्वा भक्षितवान् । क्षुधापीडितायाः कन्यकाया· करुण क्रन्दन समाकर्ण्य प्रतापस्य हृदय द्रवीभूतम् । दु खमेतत् सोढुमशक्नुवन्नसावकबरसन्निधौ सन्धिपत्र प्रेषयामास । पश्चात् पृथ्वीराजस्य प्रबोधनेन सन्धितो विरत· स्वायत्तोऽभवत् ।

पश्चाद् भामाशाहामात्येन प्रतापायातुलधनराशि समर्पित । तद्बलेन प्रतापेन महती सेना सज्जीकृत्य कमलमीरमुदयपुर च क्रमशो जितवान् ।

षष्ठेऽङ्के देवी-दुर्ग-ग्रहणस्य चर्चा वर्तते । तत्रापि यवनै· साक तुमुल युद्ध समभूत् । निर्वहणे प्रताप एवाजयत् ।

नृत्यगीतादेर्योजन कवे रोचक सविधान शोभते । कालीपर्वतादधस्तादागत्य भिल्लसैनिका· गायन्ति—

महु महु महुर सीहु सीहु णिअर पिउ पिउ चतुर वीर ।
लहु लहु चरण वहु वहु करण सहर जवण धीर ॥

करेहि जीवणपण धरेहि णु पहरण ।
मारेहि जवणगण पत्थरसमसरीर ॥

तृतीयाङ्केऽकबरद्वारा सम्राज पदस्य विडम्बना, कमलाद्वारोपेक्षा विविध धर्मानुयायिभिर्विघ्नोत्पादनं मनसि महती चिन्ता प्रदर्श्यते । अस्मिन्नङ्के मानसिंहस्य दीर्घतर स्वगतभाषण नास्ति नाट्योचितम् ।

चतुर्थाङ्कस्यारम्भे शक्तसिंहस्यैकोक्तिर्वर्त्तते । सोऽत्र मानसिंह-प्रतापयोः स्थितिमाकलयन् कांक्षति—

'यदि वयमत्र सग्रामे विजयलक्ष्मी लप्स्यामहे तदावश्यमेव भारताद् यवनापसारणेन साम्राज्यमारोपयितुमेव यतिष्यामहे ।

रङ्गपीठे चेतकनामकस्य प्रतापतुरङ्गमस्य मृत्यो प्रदर्शन सस्कृत-नाट्यसाहित्ये परमाकर्षणस्य केन्द्रम् ।

नाटकस्यास्य प्रथमाङ्कस्यावश्यकतैव नासीत् । अस्मिन्नकबरस्य चरित्रस्य दूषितपक्ष एव प्रकाशित । वस्तुतोऽस्याङ्कस्य कथावस्तु नाट्यकथया सर्वथासम्बद्धम् ।

भारतीय-स्वातन्त्र्ययुद्धस्यान्तिमचरणे हरिदासोऽगायत्—

स्व स्वजीवनदानेन रक्षणीयैव जन्मभूः ।
आदत्ते हि महद् वस्तु स्तोकत्यागेन बुद्धिमान् ॥ १ २४

भारतवर्ष हिन्दूनामेव निवासस्थानम्—

हिन्दुस्थाने यवनवसतिर्नोचिता भारतेऽस्मिन्
नीहारौघस्थितिरिव शरद्व्योम्नि नक्षत्रदीप्ते।
तस्मादस्मान्निजनिजधिया यात यूय स्वदेशान्
अस्रस्रोत स्रवतु न खलु च्छिन्नभिन्नाच्छरीरात्॥ ६ १३

लोकोक्तीनामन्योक्तीना च प्रयोग प्रभविष्णुरस्ति।

यथा—

अय कल्याणकल्लोल स्वय सम्मुखमागत।
दृढेन स विशालेन शिलाबन्धेन वारित.॥

## शिवाजीचरितम्

शिवाजीचरितस्य प्रथमाभिनय स्वाधीनतादिवस यात्रावसरे समभूत्। सूत्रधारो ब्रवीति यद् भारतवासिना हृदयेषु देशप्रेम-दीपनार्थमेव वयमभिनेतुमभिलषामः।

शिवाजीचरित १६४५ खीष्टाब्दे विरचितम्। रचनेय सर्वथा कालासु-योगिनी।

कथानुसार शिवाजी गोविन्द सहपाठिन कथितवान् यद् 'गुरुजनाः शास्त्राण्यध्येतुमादिशन्ति मनश्च शस्त्रग्रहणाय समुत्कण्ठते। राज्य यवनैरपहृतम्। शत्रूणा सख्या चान्यूना"।

गोविन्दोऽवदत्—

सम्पदि विपदि बालिश छायेवानुवर्तिष्ये भवन्तम्।
राजनि च त्वयि मन्त्री भवितास्मि काराया च सहगामी॥

ततः शिवाजी ब्रवीति—

'सुखमयमपि हिन्दुस्थानमप्यच्छहिन्दोर्न खलु भोग्यमेतत् पिशाचै.'।

द्वितीयाङ्के तोरणदुर्गस्याध्यक्ष' करीमबक्सो विलासीति श्रूयते। शिवाजीमहोदयस्तत्र साधुवेश परिधाय गतस्तस्य मनोरञ्जनाय। नर्तकीना नृत्येनासावानन्दविह्वलो जातस्तदा। अचिरेणैव सर्वे नर्तका समरमुद्रा सज्जीकृत्य दुर्गाधिकारिण आक्रान्तवन्त। करीमबक्सो निगडित। तोरणदुर्गश्च जित शिवराजेन।

तृतीयाङ्के बीजापुरस्य नादिरनाम्नोऽधिपतेर्दुर्गोऽप्यधिकृत' शिवराजेन। शिवाजीमहोदयस्य पिता साहनाथस्तस्यैव राजस्वसचिव आसीत्। स तु पुत्रस्यापराधेन बन्दित्व प्रापित'। नादिरेणाफजलनामक सेनापतिमाहूय भाषित यच्छिवाजीलुण्टाको हन्तव्य.। अफजलः प्रत्यभाषत—

'चातुरीत एव चतुर व्यापादयिष्यामि'।

चतुर्थेऽङ्के पूर्वघटनानां सङ्क्षिप्तसूचना वर्त्तते। पञ्चमेऽङ्के बीजापुरस्य सेनापतिरफजलखान शिवाजीं हन्तुमना तस्य सान्निध्यमवाप्य समुद्यतो बभूव। अभिसन्धिना शिवराजस्य वामकुक्षौ छुरिकया प्रहर्तुमियेष, किन्तु चतुर' शिवाजी व्याघ्रनखजालेन तस्योदर विदारितवान्।

षष्ठेऽङ्के नादिरशाहस्य शिवाजी-दमन-विषयकाणि कुचक्राणि सन्ति। पुण्यपत्तने सायस्ताखानो दुर्गाध्यक्ष आसीत्। कस्मिंश्चिद् दिने भास्करनामा शिवराजस्य सहपाठी सहकारी सेनापतिश्च वैष्णवसाधुवेश धृत्वा सायस्ताखानस्य समीप गत्वावोचत्—'मम मातु' शवयात्रयानेनैव दुर्गमार्गेण भवितव्यम्। तेनानुमतम्। अचिरमेव कृत्रिमशवयात्रिणस्तत्राजग्मु। ते सर्वेऽपि योद्धार सायस्ताखानस्य सेना विद्राव्य पूनादुर्गमधिकृतवन्त।

सप्तमेऽङ्केऽवरङ्गजेब' राजसभाया विराजमानोऽस्ति। राजस्वमन्त्री सूचितवान् यद् हिन्दवो जजियाकर न ददति। तदा शिवाजी तत्राविशत्। अवरङ्गजेबस्तस्योपेक्षाभावेनासौ पर क्षुभित। स गृह गन्तुमियेष किन्तु मुगलाधिपतिना कारागारे कृत'।

अष्टमाङ्के शिवराजोऽवरङ्गजेब सूचयामास यदह रुग्णोऽस्मि दानार्थं च कानिचिन् मिष्टान्नपात्राणि प्रेषणीयानि। पश्चात् पञ्चदशदिनानि यावत् मिष्टान्नवितरणमभूत्। शिवाजी मिष्टान्नपात्रान्तर्निहितो भूत्वा पलायितवान्। तस्य ग्रहणार्थमवरङ्गजेबेन महती सेना सम्प्रेषिता।

दशमेऽङ्के शिवराजस्य राज्याभिषेकस्य चर्चा वर्त्तते।

राज्याभिषेकसमये रामदासो गुरुस्तमाशीर्वचोभिरभिषेचयति स्म। पश्चाच्च छत्र समर्पयामास। माता तस्य ललाट-प्रदेश तिलकेन विभूषयामास।

हरिदासेन नाटकारम्भे भूमिकाया निवेदितम्—

'प्रायेणैव यथायथमितिहासमनुसरता वृत्तान्तपरिवृत्तिमकुर्वता पात्रमात्र च कल्पयता नाटकीयलक्षणादीनि च परिरक्षता नाटकमिद मया निरमायि'।

कविना शिवाजीचरिते गीतानि समावेशिनि। प्रथमाङ्कस्यान्ते नायकस्य सहचराणा बालगीत वर्त्तते।

बालको युवक. प्रौढो वृद्ध मनसा वचसा वपुषा शुद्ध.।
भवतु त्वरितमेकतावह देशोद्धारे मास्तु विरुद्ध ॥
धर धर प्रहरण चल चल महारणम्।
कुरु भारतोद्धरणं न भव कोऽपि विरुद्ध' ॥
इह बहुगुण आर्य नहि यवननिवार्य.।
भवामि कृतकार्य' परमपि सुसमृद्ध' ॥

नाटके छायातत्व परमोन्नत वर्त्तते। सर्वेऽपि विविधवेशान् समवलम्ब्य युध्यन्ते। सप्तमाङ्कस्य प्रारम्भोऽवरङ्गजेबस्यैकोक्त्या भवति। स कथयति यद् धर्मस्य सवर्धन जीवनस्य चरमलक्ष्य वर्त्तते। सूक्तयो यथोचित प्रयुक्ताः।

तथाहि—

१—विषमा पराधीनता पिशाची सर्वेषामेव पौरुष ग्रसते।

२—दर्पणे खल्वनुरूपमेव प्रतिबिम्ब पतति।

३—वपुर्बलाद् बुद्धिबल गरीय।

## वङ्गीय-प्रतापम्

हरिदासेन वङ्गीयप्रताप १९'७ खीष्टाब्दे विरचितम्। इद प्रथम कवे गृहे प्रयुक्तम्। वर्षत्रयानन्तर कलकत्तानगरे मिनर्वा रङ्गालये नाटकमिद द्वितीयवार सोल्लासतयोदयनसमितिद्वाराभिनीतम्।

शङ्करचक्रवर्ती कथानुसार शेरखाननवाबस्य हिंस्रकर्मचारिभि' प्रपीडिताया जनताया साहाय्यार्थ प्रायतत। नवाबस्य कोपभाजन भूत्वा स दण्डभयाच्च आत्मान परित्रातुकाम' कानने पलायितवान्। तत्र तेन प्रतापादित्येन साक सख्य समासादितम्। वार्तालाप-प्रसङ्गे शङ्करेण स्वकीयमनस्ताप एव वर्णित. —

नवीनस्त्रीमात्र गणयति विलासोपकरण
प्रजाना सर्वस्व करगतनिजस्व च मनुते ।
तृणस्तेये दण्ड प्रणयति परप्राणहरण
निरीहाणा खेलाकुतुकमसुभि' पूरयति च ॥ १ १६

एतच्छ्रुत्वा प्रतापेनापि स्वकीयविचारा प्रकटीकृता —

विधर्म्यधीना बत भारतप्रजा नदीप्रवाहे पतिता लता यथा ।
नैवोन्नति गच्छति निष्कलोद्यमा परानुगत्य हि लघीयसा क्रिया ॥

शङ्करेण प्रतिज्ञात यदह प्राणार्पणेनापि भवन्तमनुवर्तिष्ये ।

द्वितीयाङ्के यशोरराज्यस्य नरपते· वृद्धविक्रमादित्यस्य पूर्वपरिचित-वैष्णवद्वयस्य गोविन्ददासस्य श्रीनिवासस्य च परस्पर सम्मेलन वर्णितम् ।

तृतीयाङ्कस्यारम्भे कार्यस्थल शङ्करस्य गृह वर्त्तते । नवाबेन सुरेन्द्र-नाथो नाम निजसेनापतिरपराधिनो विशेषतश्च शङ्करस्य पत्नी ग्रहीतु प्रेषित । शङ्कर स्वभवन धर्मपत्नी च सूर्यकान्तगुहस्य सरक्षणे निधाय पलायितवान् । सूर्यकान्त· सुरेन्द्रनाथ निवर्तयितु बहुवार प्रार्थयामास किन्तु सुरेन्द्रनाथा नानुमेने तस्य वचनम् ।

तत सूर्यकान्तस्तारस्वरेणेद निगदितवान्—

सतीकुलशिरोमणि द्विजवरस्य पत्नीं द्विजो
भवन्नपि समीहसे यवनभोगसम्पत्तये ।
कदापि भविता न ते फलवतीयमाशालता
सवीयहविष स्रुति पतति कुक्कुरास्ये किमु ॥ ३ ८

एतत्समाकर्ण्य सुरेन्द्रनाथ· परमक्रुध्यत् । तत्र तौ तुमुलमयुध्यत । सूर्यकान्त· पक्षधरै सह वीरगति प्राप । सुरेन्द्र शङ्करस्य पत्न्या निकट जगाम । सा शिवस्तुतौ दत्तावधानासीत् । तस्मिन्नेव क्षणे शङ्कर' प्रतापश्च तत्राजग्मतु । ताभ्या सुरेन्द्रो हत ।

चतुर्थेऽङ्के वर्षचतुष्टयानन्तरवर्ति घटनाचक्र वर्णितम् । दिल्लीनगरेऽकबरस्य सभास्थानमेवास्ति दृश्यस्थली । अकबरो निखिलमपि यशोरराज्य प्रतापाधिष्ठित चकार ।

पञ्चमेऽङ्के नवाबो यशोरराज्य लक्ष्यीकृत्य भीषणाक्रमण चकार ।

तरय वासभवने तोरावनामक मित्र कामाग्निशमनार्थं तिस्रो नवीन-कन्यका' कस्माच्चित् स्थानादानीतवान् । विवशास्ता परित्राणार्थं शङ्करं प्रार्थयन्ति । तस्मिन्नेवावसरे नेपथ्यत —'हर, हरमहादेव, गुड्डुम् , गुड्डुम् दुम् इति श्रूयते' । तस्मिन् तुमुलसङ्ग्रामे नवाबो निगडित ।

षष्ठेऽङ्के विक्रमादित्येन राज्यस्य भूयान् भाग प्रतापाय तदवशिष्टो भागश्चानुजाय वसन्ताय समर्पित' । एतस्यान्ते प्रतापस्य राज्याभिषेको वर्णित' । सप्तमाङ्के मानसिहो यशोरराज्यमाक्रमति । एकदा वसन्तराय प्रताप हन्तु सचेष्टोऽभवत् किन्तु परमकुशलेन प्रतापेन स एव मृत्युपद प्रापित ।

अकबरस्य मृत्योरनन्तर जहॉगीरेण लक्षद्वयसैनिकमण्डिता महती सेना यशोरराज्य जेतु प्रेषिता । सेनापतिस्तु मानसिंह आसीत् । तस्मिन् तुमुलसग्रामे प्रथम मानसिह' पराजितोऽभवत् ।

हास्यसर्जने कविर्निष्णातो वर्तते ।

षष्ठेऽङ्के—

नारीणां गुडिका विखण्डितदल दोक्ता च सक्ता पृथक्
नस्य भूरिमनीषिणा च चुरट चचद्विलासात्मनाम् ।
हुक्का-गुडगुडिकाल्बलाविलसनै' शेषान् समालम्बते
चक्र दर्शयते च्युतं वितनुते मुक्ति प्रदत्ते परम् ॥ ६ ६

वङ्गीयप्रतापे साङ्गीतिकमनोरञ्जन स्थाने स्थाने सन्निविष्टमस्ति । प्रथमाङ्कस्यारम्भ शङ्करस्य गीतेन भवति । द्वितीयाङ्के श्रीनिवासो नाम वैष्णवसाधुर्गायति—

'जीव, श्रीनरदेहो
निमेषे हि नाशमेति कि मानमहो ।
गृह त्यज वन व्रज, हरिं भज किमिच्छसि हो ।
नारी-नर' प्रणश्वरः स्थिरतर. कोऽपि किमाहो' ॥

तृतीयाङ्कस्य पूर्वविष्कम्भकस्यारम्भो धीवराणां प्राकृतगीतेन भवति—

यथा—'अले, आकासे वहइ वाओ भासइ मेहो दीसइ भङ्गओ, इत्यादिकम्' ।

वङ्गीयप्रतापे बहुविध छायातत्त्वमस्ति । परिवर्तितवेशा परिवर्तित-मनोभावास्तथा परिवर्तितरूपाश्चानेके चरितनायका वर्त्तन्ते ।

सर्वाधिक महत्त्वपूर्ण छायातत्त्व कल्याणीचित्रमाधारीकृत्य विनिवेशित कविना ।

सूत्रधारेण नाटकस्यास्य प्रस्तावनाया सूचित यद् आदेशोऽस्ति सामाजिकाना देश-भक्ति-रस परिप्लुत सुन्दर-प्रबन्धाभिनयार्थम् । स पुनरपि कथयति—

विषमयवनराज्यात् प्राज्यदुर्नीतिपूर्णात्
सुषमविषमभावप्राप्तमिराजराज्यम् ।
स्वजनकृतमुपेत्य ज्ञातुमिच्छु स्वभावात्
तमस इव शशाङ्क पूर्ववृत्तानि लोक ॥ १ ८

## विराजसरोजिनी

विराजसरोजिनीतिनाटिकाया रचनाकाल १६०० ई० वर्ष मन्यते । मालवदेशाधिपतिर्हरिदश्वो वाराणसीवासिन्या कस्याश्चित् कुमार्या प्रेमपाशे आबद्ध इतिकथा । स भित्तावात्मान सङ्गोप्य प्रेयसी पश्यन् वर्णयति—

इममेव युवा नवाङ्गनाललितालापरस पिपासति ।
युवकात्मनि यस्य सन्निधौ नवपीयूषरसोऽपि नीरस ॥

एषा राजकन्या सरोजिनी ललनाललामभूतेति विश्वविश्रुता । सुबाहुर्दानवस्ता बलादपहर्त्तुकामोऽस्ति । तौ तुमुलमयुध्यताम् । निर्वहणे राक्षसो हत । पश्चात्तयोरुद्वाहेन सर्वथा सम्प्रीतिरजायत ।

कविना लोकरजनार्थं नृत्यसङ्गीतयोराद्यन्तनिर्वाहो विहित । तथाहि स्त्रीगानम्—

चन्द्रचूड, शान्तिकर कुरु करुणाम्,
मालती यूथी विकासिनी याति यातनाम् ।
अतीतकलिकादशामुदिततरुणरसा
विनालिमतिविरसा पश्य मलिनाम् ॥
शोषयति समीरण तापयति विरोचन
दिवसे निशि च पुन याति मुद्रणम् ॥

नाटिकायाश्चतुर्थोऽङ्को विक्रमोर्वशीयस्य चतुर्थाङ्केन प्रभावित। हरिदश्वो नायिकाया वियोगे कथयति—

द्वितयचपलभृङ्गप्रान्तसम्पीयमाना
सरलमृदुशृगालद्वन्द्वसश्रीयमाणा ।
अनधिकविकचाभ्या सङ्गता कोरकाभ्याम्
पतदुदकसरोजा नान्यरूपा स्थलेऽपि ॥ ४ १४

## वीरधर्मदर्पणम्

वीरधर्मदर्पणस्य प्रणेता परशुरामनारायणपाटणकरोऽस्ति। कविरयमपरान्तविद्यापीठतो लब्ध बी ए—स्नातकोपाधि प्रयागविद्यापीठतश्च लब्ध एम ए—स्नातकोत्तरोपाधिविद्वद्वय.। पाटणकरस्य जन्म भीमानद्यास्तटे रवागिरिनामके स्थाने समभूत्। नारायणशर्मास्य जनक आसीत्। कविना १६०५ खीष्टाब्देऽस्य नाटकस्य रचना कृता।

कथानुसार महाभारतीययुद्धे भीष्मो मरणासन्न वीरशय्याया वर्त्तते। अर्जुनस्त प्रणम्याशीर्वचो गृह्णाति—

चिर जीव चिर जीव वह गुर्वीं धराधुराम्।
स्मरावतरणमात्मान नर भूभारहारिणम् ॥

पुनश्च भीष्मेण कथित यन् मत्त पर द्रोणाचार्येण सेनापतिना भाव्यम्। न कश्चित्त जेतु प्रभवति। तदेव सवृत्तम्। द्रोणाचार्यस्य सेना पतित्वे तद्रचितचक्रव्यूहपरिवृतोऽभिमन्युर्जयद्रथेन हत। जयद्रथस्तु गर्वान्ध आसीत्। कर्ण विहाय सर्वेऽपि तस्य वीरता प्राशसन्। जयद्रथस्य विजयपूजा समायोजिता।

चतुर्थेऽङ्के शङ्कुकर्ण. कृष्णमर्जुन च हन्तु जयद्रथेन सङ्गतो भवति। शङ्कुकर्ण खड्गमादाय घोरान्धकारे गच्छतो कृष्णार्जुनयो रथमनुजगाम। सोऽचिन्तयद् यदह पृष्ठतो मार्जार इवाक्रम्य खड्गेनार्जुनस्य कण्ठ विदारयिष्यामि।

तस्मिन्नेव समये दूतेन सूचित यदभिमन्युर्युद्धे वीरगति प्राप्तवान्। एतत् समाकर्ण्यार्जुनः करुणविलाप कुर्वन्नेव मूर्च्छित। सुसमय समीक्ष्य शङ्कुकर्ण खड्गमादाय तमाचक्राम। कृष्णेन प्रत्याक्रान्त स जीवनदानार्थं प्रार्थयामास जयद्रथस्य च सर्वमपि रहस्य प्राकाशयत्।

जयद्रथस्य दुर्वृत्त ज्ञात्वार्जुनेन प्रतिज्ञातम्—

नियतमुदितैवैषा सन्ध्या श्व इव जयद्रथम्
प्रतिविधिकलायाहं हन्तास्म्यनस्तमिते रवौ ।
अथ स भगवानस्त यायाद् वचो मुधयन्मम
स्वतनुमकला सद्यो होष्याम्यह खलु पावके ॥

अर्जुनो जयद्रथस्य वधार्थं कृतसङ्कल्पोऽस्ति प्रतिज्ञापरायण । तस्याभिमानमपहर्तुं कृष्णेनाकालसन्ध्या समुपस्थापिता । युद्धं विश्रान्तमभूत् । द्रोणेन विज्ञापितम्—'मोघ' पार्थस्य सङ्गर' ।

विपण्णेनार्जुनेन धनुस्त्यक्तम् । स प्रतिज्ञाभङ्गापमानमसहमान पावकप्रवेशाय समुद्यत । दृश्यमेतत करुणमेव । सर्वे नरनार्यो रोदितु प्रारेभिरे । युधिष्ठिरोऽपि विलपन्नेव ब्रवीति—

'हा हा कृतान्त एव बलवान् सत्त्र न भूत्यै भुवि' ।

पुनर्माधवेन माया दूरीकृता । पार्थस्य प्राणा रक्षिता । सर्वेऽपि सानन्दा बभूवु ।

नाटकमिद सर्वथा परम्परानुवर्ति वर्तते । अस्य कथावस्तुनो विकास प्राचीननाटकवद् विलसति । चरितनायकाश्चादर्शपरायणा सन्ति । अर्जुनोऽभिमन्योरप्यधिकतर कर्तव्यपालन मन्यते । एकोक्तीना बाहुल्य वर्तते । कर्णस्यैकोक्तिर्नितरा प्रभावशालिनी यथा—

अदृष्टकुलसम्भव रणरसैकबद्धस्पृह
स्वमाण्डलिकमण्डना ननु निनाय यो मा पुरा ।
कृतान्तगतिविक्लव न यदह तमुत्साहये
धिगस्तु ननु जन्म मे बत कृतघ्नतादूषितम् ॥

## हरिश्चन्द्रचरितम्

वङ्गवासी रणेन्द्रनाथगुप्तो हरिश्चन्द्रचरितस्य प्रणेतास्ति । नाटकमेतत् १६११ खीष्टाब्दे विरचितमिति विदुषा सम्मति । रूपकेऽस्मिन् सत्य हरिश्चन्द्रस्य कारुण्यपूर्ण चरित प्रतिपादितम् । कथाद्वारेण कविना कर्तव्य-पथे धर्मस्य वरेण्यता प्रतिपादिता । नाटकारम्भे कर्मणो महत्ता प्रति-पादनशीलस्य नारदस्य धर्मेण साक कलहो जायते । तस्य निर्णयार्थं हरिश्चन्द्रस्य कथ दृष्टान्तरूपेण प्रस्तुतास्ति ।

प्रथमाङ्के विश्वामित्रस्य महर्षेस्तपोभङ्गार्थं विघ्नराट् सन्नद्धो जात'। स मृगयानुरागिण हरिश्चन्द्र तत्रानेतु योजना निर्माति। सयोगवशाद् राजा तत्रागच्छति। नत स कौशिकाश्रममागच्छति। कौशिकस्तमादर्शनिष्ठ श्रुत्वा तस्मात् पत्नी पुत्र च विहाय सम्पूर्ण भूमण्डल दानरूपेण याचते। बहूनि कष्टानि सहमानो राजा स्वकीयवचनपालने समर्थो भवति ।

नाटके राजा हरिश्चन्द्र पुराणप्रसिद्धो धीरोदात्तकोटिको नायक, नायिकाया शैव्यायाश्चरित्र नायकस्य धर्मपरायणता प्रकाशयितु प्रयुक्तम्। सा हताश राजान ब्रवीति—

'राजन्! अलमनेनोद्वेगेन। शैव्या क्षत्रियाङ्गना, क्षत्रियोचितकार्यपरायणा, महेन्द्रतुल्यस्यात्रभवत सहधर्मिणी। जयन्तजननी पुलोमजा कि पृथ्वीदानेन कातरा भवति ?'

## लक्ष्मणसूरेर्नाट्यसाहित्यम्

लक्ष्मणसूरिणा त्रीणि रूपकाणि प्रणीतानि। दिल्लीसाम्राज्य, पौलस्त्यवधम्, घोषयात्रा चेति।

कविरय मद्रासस्य तिन्नेवल्लीजनपदे १८५६ खीष्टाब्दे प्रादुरभवत्। अस्य पिता मुथु सुब्बाभारती सुप्रसिद्धो विद्वान् आसीत्। सुब्बादीक्षितोऽस्य गुरुरिति मन्यते।

१६०३ खीष्टाब्देऽय मैसूरस्याधिपतिना सूरिरित्युपाधिना मण्डित। तस्य पाण्डित्यस्य प्रशसायां श्रुतिपथ गतायां भारतीयशासनेनापि १६१६ खीष्टाब्दे स महामहोपाध्यायोपाधिना विभूषित। अनेनान्येऽपि बह्व काव्यग्रन्था विरचिता।

### दिल्लीसाम्राज्यम्

लक्ष्मणसूरिणा दिल्लीसाम्राज्य स्वकीयमित्रस्याश्रयदातुश्च कृष्णस्वामिनः परामर्शानुसार विरचितम्। पञ्चाङ्कमिद कवे' प्रथम नाटकम्।

बाइसरायो लार्ड हार्डिञ्जो भारतस्य हितैषी आसीत्। स पञ्चम जार्जस्य दिल्लीनगरे सम्राट्पदेऽभिषेचयितु निश्चिकाय। तेन ससदीयभवने स्वकीयप्रस्तावो विचारार्थ प्रस्तावित।

द्वितीयाङ्के ससदीयभवने तर्कवितर्को समुपस्थापिता । लार्डमार्ले महोदय प्रस्ताव समर्थितवान् । दिल्लीनगर च स्वागतस्थानमिति निर्णयोऽभूत् ।

तृतीयाङ्के भारतीयनरेशा लण्डन गत्वा सम्राज मिलितवन्त । सम्राट् तु भारतागमनाय समुत्कण्ठित आसीत् । आर्कविशपेनाशीर्वचासि वितीर्णानि ।

चतुर्थेऽङ्के जार्जस्य जलयान भारत लक्ष्यीकृत्य प्रस्थितम् । जार्जो बम्बईप्रदेशमाजगाम । तत्र तस्य लार्डहार्डिञ्जेन बम्बईप्रान्तस्य गवर्नर-महोदयेन, सेनापतिना च तस्य सुस्वागत व्याहृतम् । यानादवतीर्यासौ कारयानेन कार्पोरेशनकार्यालये गत्वा विश्रमित ।

तत्र सरमेहतामहोदयेन तस्याभिनन्दन कृतम् । तेनैव प्रशस्तिपत्र-मपि पठितम् । ततोऽसौ दिल्ली प्रतस्थे ।

पञ्चमेऽङ्केऽभिषेकस्य प्रक्रिया सम्भारदृश्य वर्त्तते । सङ्गीतेन नर्तकीना नृत्येन च दशदिश प्रससाद । वायसरायेण जार्जस्य स्वागत विहितम् । सर्वे राजानो राज्यपालाश्च परिचायिता । मध्याह्नवेलाया जार्जमहोदयो राजसिहासनमारुरोह । तत्रासौ वायसरायेन राजमुकुटेन समलङ्कृत । मधुरसङ्गीतेन सर्व सुप्रसन्न सञ्जातम् ।

## पौलस्त्यवधम्

पौलस्त्यवधे विराधस्य मृत्योरनन्तर रामकथा निबद्धास्ति । अस्य प्रथमाभिनयश्चैत्रोत्सवे समवेताना विदुषा समक्षमभूत् । द्वितीयाङ्के रामस्य सीता प्रति प्रेमविषयक स्मरणीयश्लोको वर्त्तते—

ये पूरिते सुकण्ठ्या प्रथमालापेन ते मम श्रवसी ।
धन्ये उभे हि शैषाण्यवयवसाकल्यसम्पदर्थानि ॥

रामस्यौदार्य्य प्रतिपादयन् कविर्ब्रवीति—

दान करे पादतले न तीर्थं बाहौ जयश्रीर्वचने च सत्यम् ।
लक्ष्मी प्रसादे प्रतिघे च मृत्युरेतानि रामस्य निसर्गजानि ॥

नाटकस्य वैशिष्ट्यमधिकृत्य सूत्रधारेण निगदितम्—

रसो न हीयते मुहुर्निषेवयाप्यभङ्गुरोऽमावभिवर्धतेतराम् ।
मनश्च सस्कारमवाप्य शास्त्रज न्यपेतमोह पदवी प्रपद्यते ॥

घोषयात्रा

घोषयात्राया नामान्तर युधिष्ठिरानृशस्य वर्तते । इद डिमकोटिक रूपकम् । डिमस्य परम्परागत परिभाषानुसार नाटकेऽस्मिन् देव-गन्धर्व-यक्षो-राक्षस-भूत्-प्रेत-पिशाचादय षोडशोद्धटनायका विरला सन्ति । क्वचिन्मायेन्द्रजाल-चन्द्रसूर्योपरागादिदृश्यानि सन्ति । बहुसख्यका अभिनेतारो मानवा एव । इन्द्रो देवता चित्रसेनचित्ररथौ गन्धर्वौ च तत्र सन्ति ।

प्रथमाङ्के वनवाससमये युधिष्ठिर-द्रौपदी भीमादीना वार्तालापेन प्रतीयते यद् युधिष्ठिरो युद्धार्थं सोत्साह कृत' ।

तस्मिन्नेवावसरे दूरत एव दुर्योधनस्य वाणी श्रूयते—

धन्यास्त एव पुरुषा भुवि ये रिपूणा वक्त्र प्रदोषकमलच्छविदुर्गतानाम ।
पश्यन्ति सस्मितमपत्रपयोपगूढ लक्ष्मीविलासललनीयमुखेन्दुबिम्बा ॥

एतच्छ्रुत्वा सेनाधिपेन चित्ररथेन दुर्योधनो निगृहीत किन्तु युधिष्ठिरस्य प्रयत्नेन पुनर्मोचित ।

द्वितीयाङ्के रङ्गपीठे चित्रसेन-चित्ररथ दु शासन दुर्योधन-कर्ण-शकुनीना सरक्षणे त्वेकत्र कौरवस्त्रिय सन्त्यपरत्र च लतागृहे भीमार्जुनौ स्त । चित्रसेनेन शकुनिर्मूर्च्छा प्रापित । चित्ररथेन कर्णो विनिन्दित , किन्तु दुर्योधनेन प्रशसित.—

'भीतोऽस्मादेव पार्थो दिवि भुवि च परिभ्राम्यति त्राणकाङ्क्षी' ।

चित्ररथेन कर्ण लक्ष्यीकृत्य वायव्यास्त्र प्रयुक्तम् । कर्णस्तस्य प्रभावेण पलायितः । दुश्शासनो गन्धर्वाक्रमणभीत्या चचाल । चित्रसेन खड्गमादाय तमाचक्राम । दुर्योधनसहिता. सर्वेऽपि निगृहीतास्तेन । किन्त्वर्जुनस्य दयया दुर्योधनो मोचित. । भीमेन सकलापि कथा युधिष्ठिराय निवेदिता । युधिष्ठिरस्य सन्निधौ गन्धर्वराज समाहूत । द्रौपदी सर्वासा कुरुवधूना मोचनार्थमादिष्टवती । रङ्गमञ्चे शस्त्रास्त्रप्रयोगेणाभिनयो सविशेष प्रभावोत्पादक' ।

## पञ्चाननतर्करत्नस्य नाट्यसाहित्यम्

पञ्चाननतर्करत्ननामधेयो लेखको विंशशताब्द्या लेखकेष्वन्यतमो मन्यते। नाटककारोऽय १८६६ ख्रीष्टाब्दे वङ्गप्रदेशे भट्टपल्लीति नगरे जन्म लेभे। तत्र पण्डिताना खनिरासीत्। अथ बाल्ये पितृ-विहीनो जात।

१९३७ ख्रीष्टाब्दे स काशीवासार्थ वाराणसीमाजगाम। तेनात्र सस्कृत साहित्य-परिषद' स्थापने महद् योगदान कृतम्। धर्माभ्युदये दत्तचित्तोऽय शारदा बिलस्य विरोधे भारतीयशासनदत्त महामहोपाध्यायोपाधि चास्वीकृतवान्।

कालीपदेनामरमङ्गल-कलङ्कमोचननामक नाटकद्वय विरचितम्। अनेनानेका ग्रन्थाश्चापि लिखिता। अमरमङ्गलस्य भरतवाक्यमाकर्षक विद्यते—

सन्तु स्वधर्मनिरता मनुजा समस्ता
प्रीति सजातिषु भजन्तु विहाय माया।
सम्पूजयन्तु जननीमिव जन्मभूमि
भूपालभक्ति-निरताश्च चिर भवन्तु॥

प्रथमाङ्के राणाप्रतापपुत्रश्चित्तौड़ दर्शनार्थं भगवत्याश्चार्चनार्थमुत्सुकोऽस्ति। यथा—

आजीवन भवदुपासनमेव धर्मस्त्वद्गौरवाय मरण च सुख यदीयम्।
तेषां त्वदभ्युदय-दर्शन वञ्चिताना मातर्दयस्व तनुजेषु भव प्रसन्ना॥

द्वितीयाङ्कस्य पूर्व विष्कम्भके मानसिंहेन गुप्तचरद्वय साहाय्येनामरसिंहस्य पतनार्थ योजनैका निर्मिता। तस्य समरसिंहनामा गुप्तचरोऽमरसिंहेन सह निवसतिस्म। मानसिंहेन स्वयवरप्रार्थिनी काचित् क्षत्रियकुमारी तन्निकट प्रेषिता। सोऽमरसिंहस्य विनाश कामयाञ्चक्रे।

द्वितीयाङ्के देव्यामरसिंह प्रार्थितो वीराया पाणिग्रहणाय। अमरेण प्रतिज्ञातमासीद् यच्चित्तौडविजयमन्तरा नाह काञ्चित् कामिनी कामयिष्ये। वीराब्रवीद् यदमरसिंहेन मे विवाहो भवेन्नवा किन्तु स चित्तौडाक्रमणसशये मा पतेत्। अह तस्य दर्शनमात्रेण जीविष्यामि।

चित्तौडाक्रमणस्य योजना दृढीकर्तुं विचारविमर्शार्थं सामन्ताना

सभा मिलिता। राणाप्रतापः सस्मृतं सर्वं। तत्र सामन्तानां पारस्परिकविरोधिविचारैर्योजना न सम्यक् परिणता।

तृतीयाङ्कस्य पूर्वं विष्कम्भकानुसारममरसिंहो नवनिर्मिते प्रासादे निवासं चक्रे। तत्र स विलासपरायणं सञ्जातः। राजगुरुणा राणाप्रताप-मानसिंहयोः प्रकरणविषयकमधिक्षेपान् कण्ठाग्रीकारयित्वा शुकावलिरेका मानसिंहस्यावासं प्रति प्रेषिता। अप्रिया शुकवाणी समाकर्ण्य मानसिंहः क्रोधान्धोऽभवत्। तेनैकः शुकोऽपि क्रोधावेगेन हतः।

एकस्मिन् दिवसे एकलिङ्गनाथस्य पुरोहितस्तत्राजगाम। तेन मानसिंहसमर्पिता पूजा-सामग्री न स्वीकृता। एतदपमानमसहमानो मानसिंहः प्रतिज्ञातवान् यद् अमरसिंहस्य विनाशं कृत्वैवाहं विश्रामं लप्स्ये।

चतुर्थाङ्कानुसारममरसिंहेन मुगलसेनायाः प्रतिरोधार्थं भिल्लानां महती सेना निर्मिता। शालुम्ब्रापतिभणसिंह-बान्दाठक्कुरप्रभृतयः सामन्तास्तस्य विलासनिकेतनमागत्य तं युद्धार्थं प्रेरयामासुः। अमरसिंहेन सकपटं तेषामुपेक्षा कृता। ततोऽनादृतेन शालुम्ब्रापतिनाधिक्षिप्तोऽसौ—

क्व ते यातं तेजः क्व पुनर्गमत्ते भुजबलं
क्व वा देशप्रेमा क्व च यवन-विद्वेष-गरिमा।
पितुः कार्ये भक्तिः क्व च तव गता सा नरपते
चितोरोद्धारार्थं ननु यदवलम्बोऽजनि भवान्॥

युद्धं प्रारब्धम्। यवनप्रेरितानां भीषणाग्नेयास्त्राणां भयेन क्षत्रिय-सेना रणपराङ्मुखीव बभूव। उदयपुरं लक्ष्यीकृत्य यावनी सेना प्रतिपदमग्रेऽभवत्। पलायमानां सेनां विलोक्यामरसिंहस्य पत्न्या तारस्वरेण निगदितम्—

शृणुत शृणुत पुत्रा मातरं मामवेक्ष्य
त्यजत समरभीतिं यात वैरिक्षयाय।
सकलविजययात्रा मण्डिता पुण्यकीर्त्या
वरमुचितमभीष्टं प्राप्स्यथ प्रीतिपूर्णाः॥

एतच्छ्रुत्वा द्विगुणितोत्साहैर्वीरैः प्रतिज्ञातम्—

विजयतां जननी! एते वयं वैरिक्षयाय प्रस्थिता एव, मेवाडस्य

विजयोऽभूत्। महाराज्ञी नगरगमनार्थं समुद्यतासीत्। अमरसिंहेन सा वीराङ्गना प्रशसिता--

त्व राजनीतिनिगमे मम शिक्षयित्री
शिष्यासि मे रणकलासु कृतश्रमा त्वम्।
सर्वापदि स्थिरमति सचिवोऽसि मे त्व
त्व गेहिनी सहृशदु खसुखा सखी च ॥

षष्ठाङ्कानुसार वीरा क्वचिदन्यत्र जगाम। तया वृद्धायास्तापस्या वेष परिधाय दुर्गापाठार्थं बहवो ब्राह्मणा' समाहूता'। ते सर्वेऽपि विप्रवेष-धारिणो पुस्तक-वेष्टन-निहित-शस्त्रा वीरसैनिका आसन्।

सप्तमाङ्के चित्तौडस्य विजयार्थ प्रयाणवेलायां सेनापति-पद-प्राप्त्यर्थं भणसिंह-वान्दाठक्कुरयो वाग्युद्ध विलक्षणमेवास्ति। पुरोहितस्य प्रयासेन तावुभावपि शान्तौ बभूवतु'।

अष्टमाङ्के चित्तौड विजयो वर्णित.। सागरसिंहस्तत्र देवी-पूजार्थमागच्छति, कालभैरव सन्देश शङ्कित' सागरसिंह स्वकीयम-मात्यमब्रवीत्—

एव मूढधियो गतो बहुतिथः कालोऽल्पभाग्यस्य मे।
यस्मिन् नो गणित कुल न महिमा धर्मो न शौर्यं न च ॥

सागरो लज्जित आसीत्। तस्य मानसिकग्लानिरित्थ वर्तते—

वर्त्तन्ते बहवः सुमन्दमतयो ये पापवृत्तिं श्रिता
सर्वेषामहमेव निन्दिततमो लज्जाघृणावर्जितः।
दस्योर्दास्यमुपागतेन हि मया तस्यैव वृद्ध्यै प्रभो-
रम्बायाः परिधानमम्बरमहो हर्तुं समाकृष्यते ॥

सागरेण राज्यममरसिंहाय समर्पितम्। अमरसिंहस्य राज्याभिषेकः संवृत्त.।

नाटकस्य प्रस्तावनानुसारं रामचन्द्रस्य द्वितीयपुत्रो लवो राज-स्थानस्य प्राचीनतमो राजा समभूत्। बाबरात् सग्रामसिंह' पराजितो-ऽभूत्। उदयसिंहः सग्रामसिंहस्य पुत्र आसीत्। उदयसिंहस्य पुत्रो राणाप्रताप' प्रसिद्ध एवास्ति। तेन चित्तौडस्योद्धारार्थं व्रत गृहीतम्। प्रतापस्य पुत्रेणामरसिंहेन पर्णशालायाः स्थाने सौधावलिर्निर्मिता।

अकबरस्य मृत्योरनन्तर जहाँगीरेण मेवाड-विजयार्थं महती सेना प्रेषिता।

जहाँगीरेण चित्तौडप्रदेशे सागरस्य स्वयमेवाभिषेको विहित'। चण्डस्य पितु कयाचिद् राजकन्यया विवाहोऽजनि। सा मुकुलनामधेयं तनयमसूत। स एव राज्यस्योत्तराधिकारिपदमलञ्चकार। प्रतापस्य कनिष्ठभ्राता शक्तसिंह इति श्रूयते। स दिल्लीश्वरस्य शरणमागतवान्। स पुन प्रतापस्य पराक्रमेण तस्य चरणौ स्पृष्ट्वा क्षमा ययाचे। अस्यैव शक्तसिंहस्य ज्येष्ठपुत्रो भणसिंह आसीत्।

कापटिकपात्रस्य समरसिंहस्य कार्यं छायातत्त्वानुसारि वर्तते। सोऽमरसिंहस्य विनाशार्थं कूटनीति प्रपञ्चयति। कविस्तस्य विषये ब्रवीति—

कपटो हृदये कपटो वचने कपटो नयने कपटो वपुषि।
कपटस्त्वचि चेति समृद्धगुण परवञ्चनवर्त्मनि दक्षतर'॥ १ ५६

वेश्याया मायारोदन श्रुत्वा समरसिंहो निगदति—

'अहो निपुणता वाराङ्गनाया, यया तावदसम्भिन्नस्वरवर्णवचनया तथायमार्तध्वनिरुत्थापितो यथा जानतोऽपि मे सहसाभूतार्थपरिशङ्किनी बुद्धि' समुत्पन्ना।'

द्वितीयाङ्कस्यारम्भे जरत्या' स्वगत द्वारार्थोपक्षेपण निर्दिष्टम्—

१ सा विषप्रयोगेणोपायान्तरेण वा सञोकममरसिंह मारयितुकामा।

२ समग्र राजकुल भस्मसात् कर्तुमभिलषति।

चतुर्थाङ्के समरसिंहस्य स्वगतेऽर्थोपक्षेपणमस्ति यद् दिल्लीश्वरस्य महती सेना निकटमागता। तदाप्यमरसिंहो निरुद्यमो वर्तते।

द्वितीयाङ्के मध्ये वीरा कथयति यदधुना नाह राजकुमारस्य भक्षिका प्रत्युत रक्षिकास्मि—'यत् कृत तत् कृत पुनरकार्यं न करिष्यामि। कपटेनार्यपुत्र न पातयिष्यामि।'

द्वितीयाङ्कस्य रङ्गमञ्चे गीतरयायोजन लोकरञ्जक सविधानमस्ति। सुबला गायति—

देव! सुधाकर! किर कर, दिनकर दुर्जयतिमिरहरम्।
तव सुखोदयलालसहृदयं सेवतां विमलममृतम्॥

अङ्कभागे नायकेन सर्वत्र भाव्यम्। द्वितीयाङ्कस्य प्रारम्भिकभागे नत्वेव दृश्यते। सप्तमाङ्केऽपि चैव विधा स्थितिरेवास्ति।

अङ्केषु कार्यहीन. सवाद प्रचुर। कचिदाङ्गिकाभिनयस्य समावेशोऽपि लक्ष्यते।

यथा—

इति खड्गमादत्ते (समरसिह)

यदा सेनापति पुरोहित ग्रहीतु गच्छन्ति तदासौ पुरोधा दण्डेन ताडयति। अमरसिहस्य विलासवेशेऽपि खड्गोद्धूनन लोकोत्तेजक सविधानम्।

पञ्चाननस्य लोकोक्तयो यथास्थानं सन्निवेशिता सुमण्डिताश्च सन्ति। यथा—

१ को नाम स्वतन्त्र. स्वयमुपनत पीयूष नाभिनन्दति।

२ सागरमुत्तीर्य बेलाया मग्नप्रायोऽस्मि।

३. उदर मे गुडगुडयति।

४ प्रमादे हि प्रभवो रक्षणीया मन्त्रिभि.।

## कलङ्क-मोचनम्

कलङ्कमोचन श्रीपञ्चाननतर्करत्नस्य प्रख्यात नाटकम्। कृष्णप्रियायाः राधाया कलङ्कस्य निराकरण कृतमत्रकविना।



# कालीपदस्य नाट्यसाहित्यम्

कालीपदस्योपनाम काश्यपकविरस्ति। अद्यतनस्य बाङ्गलादेशस्य फरीदपुरमण्डले कविरय तर्कभूषणस्य हरिदासशर्मणस्तनय आसीत्। अय १८८८ खीष्टाब्दे जन्म लेभे।

अस्य परिवार' कान्यकुब्जप्रदेशीयः श्रूयते। कालीपदस्य पौर्विको भ्राता हरिदाससिद्धान्तवागीश आसीत्। अनेन महामहोपाध्यायस्य शिवचन्द्रसार्वभौमस्य सकाशात् सस्कृतमधीतम्।

कालीपदेन विद्यालयेषु संस्कृतस्याध्यापनं प्रारब्धम्। स कलकत्तानगर्यां राजकीय-सरकृत-विद्यालये न्यायविभागे प्राध्यापकपद-मलञ्चकार। बहूना पत्रिकाणा सम्पादनमनेन कृतम्। सस्कृत-परिषद् पत्रिकायामस्य निबन्धा काव्यमालिकाश्च प्रायश प्रकाशिता। १९७२ ईशवीये वर्द्वान-विश्वविद्यालयेनासौ 'डी० लिट्' इत्युपाधिना समलङ्कृतः। तेन बहूनि पुस्तकानि विरचितानि। महाकाव्य-काव्य-गद्य-पद्य-समालोचना-दर्शनादि-विविध-विषयेष्वनेन ग्रन्था लिखिता'। तेन निम्नलिखितादर्शन-ग्रन्था विरचिताः--

१ न्याय-परिभाषा। २. जातिबाधक-विचार'।
३. ईश्वर-समीक्षा। ४. न्यायवैशेषिकतत्त्वम्।

वङ्गभाषायामपि कवेरस्य रचना नितरा प्रसिद्धा'।

कालिपदेन वाराणसेय-सस्कृत-विश्वविद्यालये न्याय-वैशेषिक-दर्शन मधिकृत्य यदध्यक्षीयभाषण प्रस्तुतम्, यानि च गङ्गानाथझा-स्मृति-समारोहे त्रीणि व्याख्यानानि समारोपितानि तानि सर्वाण्यपि प्रकाशितानि। स १९७२ ईशवीये दिवङ्गतोऽभूत्।

तर्काचार्यः स्वभावतो विनम्र', सार्वभौम व्यक्तित्वशाली चासीत्। अनेन विरचितानि त्रीणि नाटकानि सन्ति।

१—नलदमयन्तीयम्। २—माणवक-गौरवम्।
३—प्रशान्तरत्नाकरम्। ४—स्यमन्तकोद्धारम्।

# माणवक-गौरवम्

माणवक-गौरवस्य प्रथमाभिनय संस्कृत-साहित्य-परिषदादेशानुसार प्रयुक्त'।

अत्राचार्यो धौम्यो विलम्बोत्थित कात्यायन छात्रान्तराणि विनिद्रयितुमादिष्टवान्। ते सर्वेऽपि छात्रा गुरुमातु स्नानार्थं सरोवर गामिमार्गस्य सौष्ठवकरणे दत्तावधाना बभूवु'। हारीतेन विरुद्धमाचरितम्।

एकस्मिन् दिवसे स्नात्वा निवर्तमानो धौम्यो क्षुधा-पिपासा-मूर्छितमुपमन्यु नाम कञ्चिच्छिक्षार्थिन व्यलोकयत्। स त कमण्डलुजलेन जीवयामास।

द्वितीयाङ्के आरुणिनामकस्य छात्रस्य पितरौ चिन्तितौ दृश्येते। माता गुरो कठोरतामेव निरन्तर वर्णयति किन्तु पितु' समाश्वासनेनोपनीत स गुरोरादेशपालने सर्वाधिको दृढव्रतो बभूव।

कदाचित् स केनचित् सर्पेण दशित । तेनैव पथा गच्छता धन्वन्तरिणा विहितचिकित्सोऽसौ पुनरपि जीवितो जात ।

चतुर्थाङ्के हारीतो गुरुद्वेषकारणात् कुष्ठपीडितोऽस्ति। धौम्यस्तं सूर्योपस्थानार्थमादिष्टवान्। उपमन्यु गोचारणकार्ये नियुक्त आसीत्। सोऽपि महत् कष्टमन्वभूत्। गुरोर्मनोधारणासीद् यत् सुवर्णं तप्त भूत्वैव रमणीयालङ्कारता प्रयाति—

विना हुताशस्य विशेषतापन न जातु शुद्धिं समुपैति काञ्चनम्।
न वा तदेवायसताडनाद् ऋते मनोहरालङ्करणत्वमञ्चति॥

आरुणेर्गुरुभक्ति दृष्ट्वा धौम्यो निजगाद—'सम्पूर्णमद्य ते सुदुष्करं शिष्यव्रतम्। तदद्यारभ्य सर्वास्ते विद्या सरहस्या प्रतिभास्यन्ति।'

एकस्मिन् दिवसे सन्ध्यायामुपमन्युर्धेनू समादाय न प्रत्याजगाम। स आन्ध्यदोषात् कूपे निपतित । स गुरोरनुग्रहेण पुनरपि लब्धदृष्टिर्जात । हारीतोऽपि स्वकीयगुरुद्रोहकारणवशात् कुष्ठपीडया निरन्तर रोदति। यथा—

अश्रुणा तस्य दीनस्य हृदय-प्लाविना भृशम्।
सानुतापविलापैश्च पाषाणोऽपि विदीर्यते॥

विहङ्गकूलनिर्ह्रादैः साय शिशिरबिन्दुभिः ।
तद्दु'खदु खिता नून रुदन्ति वनदेवता' ।।

सोऽपि गुरोरनुग्रहेण झटित्येव कुष्ठविहीनोऽभवत् । मूर्तिमती गुरुभक्तिर्गगनतो बभ्रे—

शिष्ये गुरौ च यशसामभिवृद्धिरस्तु' ।

माणवकगौरवस्य कथानक सर्वथा नवीनमेव । नायको ब्राह्मणोऽस्ति । नाटकस्यास्य संविधान सस्कृतिपरकम् । राजतन्त्रस्य, मुनिजीवनस्य, नीतेश्च सूक्ष्मनिदर्शन पदे-पदे परिभाषितम् । अस्य भूमिका महत्त्व-शालिनी ।

नाटके जागरणस्य गीताना बाहुल्य वर्तते । यथा प्रथमाङ्के चतुर्थ-दृश्य-पटस्यारम्भो ब्रह्मचारिणो निम्नलिखितेन गीतेन भवति—

अयि जागृति मूढ जीव निद्रा किमु सेवसे ।
न कथमरुणरागरक्तपूर्वगगनमीक्षसे ।।

द्वितीयाङ्क तृतीयाङ्कयोर्मध्यभागो विवेकगानरूप । सर्वेषु पात्रेषु गतवत्सु रङ्गमञ्चे विवेक एकाक्येवागच्छति । सप्तमाङ्कस्य तृतीयदृश्ये गुरुभक्तेर्गीतमेव वर्तते—

अभया गुरुपदसेवा, यो गुरुमञ्चति कुशल स भजति ।
तस्य हि तुष्टा देवा ।।'

नाटके दृश्यपटाना विशेषता वर्तते । वैतालिका रूपकान्तरेषु प्रायोऽङ्कान्तभागे कालवर्णन प्रकुर्वन्ति । नाटकेऽस्मिन् कार्यमिद धौम्येन सम्पाद्यते । एकोक्तीना सर्वत्र बाहुल्य वर्तते । प्रथमाङ्कस्यैकोक्तौ धौम्यो देश-कालस्य वैषम्य प्रति समुद्विग्नता व्यनक्ति । अस्यैवाङ्कस्य तृतीयदृश्यपटे कात्यायनो गुरो. परुपताविषये ब्रवीति—

सर्वाः शिष्यहितायैव गुरो परुषवृत्तय' ।
विद्विषन्ति गुरु मूढा' पुरुपाः पापपङ्किलाः ।।

## प्रशान्तरत्नाकरम्

प्रशान्तरत्नाकरस्यानुबन्धिकाया कालीपदो लिखति यदादिकवि' प्रथमं दस्युरासीत् । कथेय न केवलमध्यात्मरामायणे प्रत्युतान्यत्रापि प्राप्यते । एतदपि नाटक संस्कृत-साहित्य-परिषद सदस्यैरभिनीतम् ।

अत्ररत्नाकरो नाम मल्लभिक्षुः क्वचिदपि भिक्षां न लभते। स धनिना धन बलादाहर्तुमिच्छति। तस्मिन्नेव समये काचित् भिक्षुकी गायति—

जीव गुणाकर सुचरितमनुसर खलतां परिहर वह बहुमानम्।
भौतिककाये दुरितसहाये मा कुरु मा कुरु गौरवदानम्॥
विधिविपरीतं विधिमनुभीतं मानसमधिकुरु लसदवधानम्।
वरमिह मरण सुचरितशरण तदपि वर नहि पापविधानम्॥

कश्चिद् दस्युस्तत्रागत्य कस्याश्चित्स्त्रियाः समस्त-सामग्री-हरणानन्तरं स दुरात्मा तया सह रमण कर्तुमभिललाष। रत्नाकरो दण्डप्रहारेण तस्करमपसार्य ता ररक्ष। सा स्वकीया समग्रामपि सामग्रीं रत्नाकराय दातुमियेष। रत्नाकरो ब्रूते—

'भवत्या मातृतुल्याया नापर किञ्चिदर्थये।
मनस्तापविनाशार्थमाशीरेव प्रदीयताम्॥

वीरबलनामधेयेन तेन तस्करेण सह रत्नाकरस्य सहता सञ्जाता। रत्नाकरो दस्युसङ्घस्य नेता बभूव। ते सर्वेऽपि चौरा' धनिना धनमपहृत्य दीनेभ्यो वितरन्ति स्म। रत्नाकरः साम्यवादसिद्धान्तविषये ब्रवीति—

गर्व खर्वयत प्रभावजनित वित्तेश्वराणा मुहु'।
सर्वेषा समतास्तु भूमिवलये दैन्य लय गच्छतात्॥
एको भूरिविलासभोगनिरतो भोज्य विना चापर'।
प्राणैरेव वियुज्यते कथमिद वैषम्यमालोक्यताम्॥

तृतीयाङ्के रत्नाकर सुहृद्भि सह कामेश्वरस्य राजधानीमाक्रमितुमियेष। त कपटप्रबन्धेन भ्रान्त कृत्वासौ तस्य समस्त कोश-धन जहार। राजपुरुषै सर्व रहस्य ज्ञातम्। ते सर्वेऽपि निगृहीता' मुहुर्मुहुश्च ताडिता किन्तु सहचराणा सहयोगेन पुनरपि मुक्ता अजायन्त। रत्नाकरस्य कुकृत्यैर्दु खितस्य पितात्महत्या चकार। अष्टमाङ्कानुसार रत्नाकरपरिवारस्य सर्वेऽपि सदस्या. मृत्यु प्राप्तवन्त.। रत्नाकरोऽपि क्रूरा वृत्ति परित्यज्य पस्याया संलग्नोऽभवत्।

एकोक्तीना विपुलता समुल्लेखनीयास्ति। रङ्गपीठे राज्ञो तस्य वेश्यायाश्च परस्परालिङ्गनमभारतीयम्। प्रथमाङ्केऽन्योन्यताडनस्य दृश्य मनोरुजक वर्त्तते।

## नल-दमयन्तीयम्

कालीपदेन नल-दमयन्तीयस्य रचना १९२७ खीष्टाब्दे कृता। नाटकमिद कालानुरूप वर्तते। कवि कथयति—

कालानुरूपरचनाप्रचित यदि स्यात्
काव्य तदा कवयितु कविता चकास्ति।
वीरस्य भूषणमरातिवधे कृपाण
श्रृङ्गाररङ्गसमये तदयोग्यमेव ॥

राजा नलो दमयन्त्याश्चित्र विलोक्य तस्या दर्शनार्थ व्याकुलो जात। स मनस्ताप दूरीकर्तुमुद्यान प्रविवेश। तत्रासौ राजहस ददर्श। हसो राज्ञो दमयन्ती प्रति दौत्यकार्यं सम्यक्तया सम्पादयामास। विदर्भदेशे दमयन्तीस्वयवरस्य कार्यं प्रारब्धम्। बहुषु विघ्नेषु सत्स्वपि नलदम्पत्यो विवाह सम्पन्नोऽभवत्।

नल द्यूते पराजितो वने प्रसुप्ता ता विहायान्यत्र गच्छति। तारस्वरेण क्रन्दन्ती दमयन्तीं विलोक्य किरातराजस्तस्या' रक्षार्थ सर्वमपि प्रबन्ध चकार। तयोश्च पुनरपि समयान्तरे सगमो जात'।

बहुषु स्थलेषु दीर्घतरा' सवादा नाट्योचिता न प्रतीयन्तेऽत्र। नाटके क्वचिदपि प्राकृतभाषाया प्रयोगो विरल एव दृश्यते। छायातत्त्व प्राय सर्वेष्वपि नाटकेषूपलभ्यते। पात्रानुसन्धानदृष्ट्या मानवरूपधारिभावाना समवतरणमतीव मनोरञ्जकम्। विवेकमोहादयो भावा अपि पात्रता गताः। चतुर्थाङ्के मायाव्यापारद्वारारभटीवृत्ते प्रवर्तन रमणीयमस्ति।

## स्यमन्तकोद्धारम्

ग्रन्थोऽय व्यायोगकोटिक रूपकम्। अस्य प्रणयन खीष्टाब्दस्य १९३१ वर्षे सञ्जातम्।

अत्र मिथ्यावादो यत् कृष्णेन स्यमन्तकमणि-कृते प्रसेनो हत इति। कृष्ण मित्राणि प्रति सन्देश प्रेषयति—

सस्नेहदृष्ट्या चिरमेव दृष्टो युष्माभिरासीदमलो हि कृष्ण।
मिथ्यापवादं व्यपनीय भूय' स्नेह पुराण पुरतः स पायात् ॥

तस्मात् स्थानात् कृष्णो जाम्बवतो गृहमगच्छत्। तत्र तस्य व्यायोगोचितो वार्तालापोऽभूत्।

स्यमन्तकोद्धारो नाम व्यायोगस्त्वेकाङ्की सन्नपि पञ्चदृश्यपरिलसितोऽस्ति। प्रत्येक दृश्यमङ्कायमान वर्त्तते। सर्वाणि पात्राणि तत्र सङ्घीभूय नान्दीपाठ पठन्ति। नाट्यारम्भार्थं प्रस्तावनाया पारिपार्श्वकादय रूपकवस्तुसम्बन्धनिबन्धिनी काञ्चित्कल्पितघटनासमस्या समुपस्थापयन्ति। अष्टादशशतके प्रस्तावनान्ते त्वेतादृग्विधमायोजन सुप्रचलितमासीत्। सर्पदष्ट कञ्चिद् विलोक्य ब्रवीति सूत्रधार —

विषघ्न मणिमाहर्त्तु गच्छामि गिरिकन्दरम्।
एष कृष्ण इव प्राप्त स्वामकीर्तिमपोहितुम्॥

व्यायोगे नियमतो विष्कम्भक-प्रवेशकौ न स्त। रूपकेऽस्मिन्तथापि सर्वत्रार्थोपक्षेपोचितसामग्री त्वङ्कभागे समाविष्टा। रूपकारम्भे सात्यकिपृष्ट' कृष्णो ब्रवीति यद् सूर्यप्राप्तस्यमन्तकमणि' सत्राजिते स्वभावानुसार लाभप्रद एवासीत् किन्तु तस्य पुत्राय प्रसेनाय हानिप्रद एव यतो हि प्रसेन पापकर्मासीत्, मणिरय च पापात्मान प्रणाशयति। किमर्थं च कृष्णेन मणिरय चोरित इति सशय एतदपि स्पष्टीकुर्वन् माधवो निवेदयति यद् यदा सत्राजिदिममादायात्रागतस्तदा मया 'मणिरय सर्वथा राजयोग्य' इति भणितम्। सपदि समर्पय चैन महाराजमुग्रसेनम्। सत्राजिता प्रसेनाय मणि समर्प्य विपरीतमेवाचरितम्।

वनदेवी–जाम्बवद्–विष्णुशक्तिप्रभृतीना मानवरूपेण रङ्गमञ्चावतरण छायातत्त्वात्मक प्रतिभाति।

चतुर्थदृश्ये स्यमन्तकमणियुग्मप्राप्तुकामस्य दारकस्य बालहठसुलभं सविधान विशेषरमणीयमेव।

रूपकेऽस्मिन् वीररस एवाङ्गीरसपद प्रापित किन्त्वेतस्याद्यन्तव्यापिनी स्थितिर्नास्ति। अन्तिमदृश्य सर्वथा शृङ्गारपरिलसितमेव।

शब्दविन्यासः समग्रसस्थानशोभावर्द्धक एवास्ति। यथाधस्ताच्छ्लोके वनप्रियकोकिलस्य प्रयोग —

बहुश्रुताना भवतां समागमाद् विशीर्यते मुग्धजनस्य मन्दता।
वसन्तसङ्गाज्जडिमानमात्मनो वनप्रियो मुञ्चति पञ्चमस्वरे॥

कालीपदस्त्वेकोक्तीना प्रभविष्णुताया विशेषरूपेणास्थावान् वर्तते ।

रूपकेऽस्मिन् गीताना प्रयोगो बाहुल्येन कृत' कविना । बहुविध-प्रयोजनानुसारमनेकगीतसमावेशोऽस्ति । वनदेवी तु योग्यतानुसार सर्वत्रैव गायति । यथा—

'तापस-पूजित, कौस्तुभशोभित भक्तवशीकृतविश्वपते ।'

न केवल गीतस्य पञ्चमदृश्येऽपितु रङ्गपीठे नृत्यस्यापि समायोजन-मस्ति । कुमार्यो नृत्यन्ति, गायन्ति च ।

स्यमन्तकोद्धारस्य सूक्तिराशिरपि रमणीयोऽस्ति ।

यथा—

१—जनेषु लब्धमानस्य गुणाढ्यस्य मनस्विन ।
जीवन मरण साक्षादपवादो भवेद् यदि ।।

२—यदेव पश्यन्ति महाजनाना वृत्त जनास्तत्र रति श्रयन्ते ।
कलङ्कसशयक्षिप्तै कटाक्षैर्जनससदि ।
बान्धवैरीक्ष्यमाणाना जीवन मरणायते ।।

रूपकेऽस्मिन्नारभट्याश्वरमकोटिको विन्यास समुपलभ्यते ।



## जीवन्यायतीर्थस्य नाट्यसाहित्यम्

जीवस्य जनक स्वकीयसमयस्य सुप्रसिद्धसस्कृतलेखक' कविपञ्चानन', तर्करत्न चासीत्। जीवो बङ्गप्रदेशे चौबीस-परगनान्तर्गत-भट्टपल्लीनगर्या २६ जनवरी १८९४ खीष्टाब्दे प्रादुरभूत्। भट्टपल्ली विदुषा खनिरिति प्रसिद्धि। तेन कलकत्ताविश्वविद्यालये २६ वर्षपर्यन्त सस्कृतमध्यापितम्। एतदनन्तर स भट्टपल्लीसस्कृत-महाविद्यालयस्य पदमलञ्चकार।

जीवस्य नाट्य-रचनासु महाकविकालिदास नाम नाटक सर्वातिशायि वर्त्तते। पुरुषपुङ्गव-कैलाशनाथविजय-कुमारसम्भव-रघुवश-शङ्कराचार्यवैभव-विवेकानन्दचरित-स्वाधीनभारतविजयप्रभृतयोऽनेके प्रिसिपलग्रन्था प्रणीता जीवेन। अधुनापि स साहित्य-सर्जने व्यापृत'।

### महाकविकालिदासम्

महाकविकालिदास विशशतकस्य सर्वश्रेष्ठमनुत्तम च नाटक वर्त्तते। अस्य प्रथमाभिनय १९६२ खीष्टाब्दे कालिदाससमारोहावसरे उज्जयिन्या समपद्यत। रूपकेऽस्मिन् नटी सस्कृत ब्रवीति किन्तु नाटकान्तरीयप्रस्तावनासु सा प्राकृतमाश्रित्य व्यवहरति।

अत्र दशपुरे नाम नगरे विद्यावतीति राजकुमारी वर्त्तते। तत्स्वयवरे पराजिताः समरेन्द्र-नरेन्द्र-मथुरेशाख्यो राजकुमारा कालिदासं व्यलोकयन्। कालिदासस्तु मूढ आसीत्। तैर्विचारित यद्—

शिखण्डिन पुरस्कृत्य भीष्मशौर्य यथा हृतम्।
तथैन मूढमासाद्य जेतव्य' प्रमदामद ॥

प्रथमाके राजसभा समवेतास्ति। त्रयोऽपि राजकुमारास्ते कालिदासं पुरस्कृत्य समुपस्थिता, समभूवन्। विद्यावती सभास्थानमाजगाम। सकेत-शास्त्रार्थः सकपट समारब्ध। विद्यावती अङ्गुलीयकपरिलसितां तर्जनी प्रदर्शयामास। तत्पक्षधरेण सोमशर्मणा तद्व्यंग्यार्थस्त्वेवं व्यक्तीकृत,—

अधिगगनमनेकास्तारका. सन्ति दीप्ता
जगदपि परिपूर्णं वस्तुभिश्चित्ररूपैः ।
विलसति सकलाना व्यापक सर्गरक्षा-
लयकृदखिलसार कः पदार्थः स एकः ॥

कालिदासेन तर्जनी, मध्यमा चाङ्गुल्यौ प्रदर्शिते । नरेन्द्रोऽस्याशय-मेवं व्यक्तीचकार—

ब्रह्माण्डभाण्डशतकोटविकासलीला शक्त स ईश्वरकुलालवरो विधातुम् ।
मायामदृष्टमुत वा प्रकृति सहायीकुर्वन् मुदा मृदमिव द्वितयं पदार्थम् ॥

एवविधशास्त्रार्थप्रपञ्चेऽन्ततोगत्वा कालिदासो विजयी घोषित । तस्य विद्यावत्या सह विवाहोऽजनि ।

द्वितीयांके कालिदासस्य बालिशताया. शनैः शनैः रहस्योद्घाटनं सवृत्तम् । रुदती विद्यावती ब्रवीति—

'हा दुर्दैवम् । धिग्धिङ्मे विद्याविभवम् । यदहं विद्याहीनस्य हस्तयोः पतितास्मि ।'

तया पुनरपि कथितम्—

'अस्ति कश्चिद् वाग्विशेष उत्तरञ्चेत् प्रदीयताम् ॥'

भृशं तिरस्कृत. कालिदासो विद्याप्राप्त्यर्थं नर्मदातटे श्मशानघट्टे काल्या समाराधन प्रारेभे । भगवत्याः सकाशान्नित्य विद्यामेव याचते-स्म । तद्भक्तिपरितुष्टा काली तमब्रवीत्—

'तथास्तु । वाग्विभूतिमान् भव, विश्वविजयी भव । हिमाचल इव सुरसरस्वती-रस-माधुरीप्रभवो भव' ।

तस्मिन्नेव समये पतिं गवेषमाणा कञ्चुकीसहाया विद्यावती तत्रा-जगाम । तत्र पुनरपि तयोः सम्मेलन समभूत् ।

कालिदासो विक्रमादित्यस्य केनचित् शिविकावाहकेन बलाद् गृहीतः राज्ञश्चान्तिक प्रापितः । कालान्तरे लोकोत्तरकाव्यप्रणयनपाटव कवेर्विलोक्य सर्वेऽपि चकितचकिता अजायन्त । कस्मिश्चिद्दिने कविगोष्ठी समारब्धा राजसभायाम् । समस्यासीत्—

'न हि सुखं दुःखैर्विना लभ्यते ।'

सर्वैं कविभि स्वरचना क्रमशः श्राविता'। कालिदासस्य सर्वाधिकरसमय पद्यमिदमासीत्—

श्लाघ्य नीरसकाष्ठताडनशत श्लाघ्य' प्रचण्डातप'
श्लाघ्य पङ्कविलेपन पुनरिह श्लाघ्योऽतिदाहोऽनलै.।
यत्कान्ताकुचकुम्भ–बाहुलतिकाहिल्लोललीलासुख
लब्ध कुम्भवर त्वया न हि सुख दु खैर्विनालभ्यते ॥

एतत्समाकर्ण्य विक्रमादित्योऽब्रवीत्—

'धन्यतमोऽसि कालिदास। अनवद्या ते रचनाशक्ति ॥'

पञ्चमाङ्के हिमालये काचिद् वनचरी विद्यावत्या निकटमागच्छति। सा स्वामिन बलाहक तद्विषये पृच्छति। सम्यग् ज्ञात्वा स्वकीयकुटीरे तस्या' स्वागत विहितवती। कालिदासोऽपि प्रियतमान्वेषणनिरतस्तत्रायया़ौ। राजा विक्रमोऽपि तत्राजगाम। कालिदास–विद्यावत्यो. प्रेम–प्रकर्षोज्ज्वलं सम्मेलनमभवत्।

विष्कम्भके कथानायकः कालिदास एवैकमात्र पात्र वर्त्तते। प्रथमाङ्कस्य पूर्व विष्कम्भके न केवल सूचना प्रत्युत दृश्यानि सन्ति। एतत्सर्वमभारतीयम्।

एकोक्तीना बाहुल्यमस्मिन्नाटकेऽपि दृश्यते। रूपकेऽस्मिन्नङ्कावतार इवाङ्काशावतारोऽपि समुपनिबद्ध.। एतदपि सर्वमभारतीयमेव।

गर्भाङ्कस्य नूतनरूप नाटकेऽस्मिन् वर्तते। चतुर्थाङ्के रङ्गमञ्चेऽभिज्ञानशाकुन्तलस्य पञ्चमाङ्कस्य दृश्य समाविष्टमस्ति।

जीवेनाङ्के नूतनदृश्योपस्थापनार्थं पटी–परिवर्तनस्य विधिः सम्यक्तया समादृत.। छायातत्त्वं प्राचुर्येणोपलभ्यते। पञ्चमाङ्के हिमालयो नाट्यस्थलीस्वरूप सम्प्राप्य नाटकस्यौदात्त्य परिबर्धयति।

गीतराशिभिः कालिदास–नाटक सुवासित वर्तते। वैतालिका नेपथ्यतो गायन्ति—

एहि सुजनगण वाणीपूजनपुण्यदिवस इह तीर्थे।
सद इदमतिथे सदयमलङ्कुरु विद्याविलसितकीर्ते ॥

जीवो नैसर्गिक–काव्य–प्रतिभामण्डितो देशकालोचितरचनानिष्णातोऽस्ति।

## शङ्कराचार्यवैभवम्

शङ्कराचार्य-वैभवस्य प्रथमाभिनय १९६८ खीष्टाब्दे वाराणसेय-संस्कृत-विश्वविद्यालयस्य सरस्वतीमहोत्सवावसरे समपद्यत ।

कथानुसार त्रिचूडग्रामे शिवगुरुर्नाम ब्राह्मणः शिवमन्दिरे पुत्र-कामनया शिवाराधनं विदधाति । तीव्रव्रताराधनसन्तुष्ट' शिव' स्वयमेव शङ्कररूपेणावतरति । द्वितीयाके राज्ञ सुधन्वन सभाया बौद्धाचार्य-कुमारिलयो र्विवादप्ररतावोऽस्ति ।

## कुमारसम्भवम्

कुमारसम्भव नाम नाटकमुज्जयिन्या कालिदास-समारोहेऽभिनीतम् ।

अत्र पार्वत्याः पितृभ्या पृष्ट उपाध्यायो ब्रवीति यत् पार्वत्या रूपानुरूपसौभाग्य सर्वथा दुर्लभमेवास्ति । तदनु नारदरतत्रागत्य गौर्या सौभाग्यवर्णन विदधाति शिव च तस्या भाविन वल्लभ प्रमाणायति ।

पार्वती प्राक्तन-जन्म-पतिरूप शिव झटित्येव सस्मार । 'पुनरप्यह पतिरूपेण तमेव प्राप्स्यामीति निश्चित्य तपस्यार्थ वन जगाम ।

सुरपतिस्तारकासुरभयाक्रान्त आसीत् । यावदेव तेन तारक सहारक-कार्तिकेयावतारविषये किञ्चिद् ज्ञात तावदेवानेन विलम्बासहेन सत्वर कार्य-सम्पादनार्थ कामदेव प्रेषित' । वसन्तसहायो मनसिज. सपत्नीक-स्तत्र तपोभूमौ समाजगाम ।

नन्दी द्वारदेशमध्यास्ते स्म । पार्वत्या पुरस्थिताया मदनेन शिव लक्ष्यीकृत्य वाणप्रहारो विहित किन्तु दुर्दैववशाच्छिवस्य नेत्राग्नि-ज्वालाभिर्दग्धो भूत्वा भस्मनिश्शेषतां गत' ।

चतुर्थांके रतिविलाप एकोक्तिरूपो वर्तते । पञ्चमांके पार्वत्या कठिनतम तपो वर्णितमस्ति । अन्ततोगत्वा शिवपार्वत्यो परिणय समजनि ।

कीर्तनिया नाटस्य स्तुति-परम्परा नाटकेऽस्मिन्नादिमध्यावसानेषु सर्वत्रैवानुबद्धास्ति । नारदो रङ्गपीठमागत्य गायति—

जयजगदीश्वर विश्वचराचर दृश्यविचित्रविकास' ।
त्वमसि भक्तजनमानसरञ्जनमञ्जुलरूपविलास ॥

समग्रमपि नाटक गीतसवलित वर्त्तते । प्रियतमे ह्युपरतेऽपि रत्या विलापो गीतात्मक एवास्ति ।

## रघुवंशम्

रघुवशनाटकस्याभिनय उज्जयिनीनगर्यां कालिदाससमारोहे समागताना विदुषा प्रीत्यर्थं समभूत् ।

दिलीपस्याश्वमेधो नाम यज्ञ' समारब्धोऽस्ति । यज्ञियोऽश्वोऽदृश्योऽभवत् । इन्द्र एवास्त्यश्वापहारीति वसिष्ठो बभाषे । रघुरश्वानयनार्थं प्रेषित ।

द्वितीयाके रघुर्दिग्विजयार्थ प्रतस्थे । तृतीयांके कौत्सस्य प्रकरणमुपनिबद्धम् । चतुर्थांके स्वयवरेऽजेन्दुमत्योर्विवाहो वर्णित ।

इन्दुमती दशरथं नाम पुत्र जनित्वा स्वर्गलोक गता । पञ्चमांके दशरथस्य मृगयावर्णन विद्यते । दशरथस्य बाणेन श्रवणकुमारो नाम कश्चिन् मुनिकुमारो गतासुर्बभूव । तस्य नेत्रहीनाभ्यामसहायाभ्यां पितृभ्यामभिशप्तो दशरथ ।

स्थाने-स्थाने गीताना समावेशो दृश्यते । प्रथमाङ्कान्तिमभागे वन्दिद्वय गायति—

जयति दिलोपो रविकुलदीपः शोभन-सवन-विधायी ।

## नाग-निस्तारम्

पञ्चाङ्केऽस्मिन्नाग-निस्तारनाटके महाभारतस्य प्रसिद्ध जनमेजयाख्यानमुपनिबद्धम् ।

राजा परीक्षित् मृगयापरायणोऽस्ति । स तृषा शमयितु शमीकर्षेराश्रमपदमागच्छति । मुहुर्मुहु' प्रतिबोधितोऽपि समाधिष्ठो महर्षिर्न किञ्चिदपि वव्रे । राज्ञा तस्य कण्ठे मृतसर्प परिवेष्टित' । समिधाहरणानन्तर निवर्तित' शमीकपुत्र श्रृङ्गी विलोक्येद सपद्येवाभिशशाप यत् 'सप्ताहाभ्यन्तर एव राजा तक्षकदष्टो भूत्वा कथाशेषता प्रयास्यति' ।

राज्ञा स्वात्मरक्षार्थ मन्त्रिणा परामर्शानुसार सर्वेऽप्युपाया' कृता किन्तु सप्तमे दिवसे कश्चिद् ब्राह्मण आशीर्वादप्रदानार्थ तत्राजगाम । स राज्ञे कुसुममेक समर्पयामास । तस्मात् पुष्पात् तक्षक' प्रकटीभूय राजान ददश ।

तृतीयाङ्कानुसार जरत्कारुर्नागकन्यकयैकया विवाहञ्चकार। पञ्चमांके जनमेजयस्य नागयज्ञ विरमय्य जरत्कारुर्नागान् रक्षति।

## निगमानन्दचरितम्

श्रीजीवस्य निगमानन्दचरित नाम नाटक सप्तस्वङ्केषु विभक्तम्। १६५२ ख्रीष्टाब्देऽस्याभिनयो राममोहन-लाइब्रेरीभवने कलकत्तानगरे सम्पन्नोऽभवत्। चरितात्मकमिद नाटक वर्तते।

## कैलाशनाथ-विजयम्

कैलासनाथ-विजय-व्यायोगस्य प्रथमाभिनयो बङ्गालस्य सस्कृत-कालेजे सञ्जात।

कथानक पौराणिक वर्तते। रावण' काल विजित्य गर्वान्धोऽभवत्। अथासौ कुबेर विजित्य तस्य पुष्पकविमानमानेतुकामोऽस्ति। स स्वकीय-पराक्रमविषये मन्दोदरी सूचयति—

तपसा तेजसा कीर्त्या मूर्त्या मर्यादया तथा।
औदार्येण च शौर्येण लोके कोऽन्योऽस्ति मत्समः॥

रावणो झटिति कैलासशिखरमारुरोह। तत्रासौ कुबेरमाचक्राम। यक्षाधिपतिः पराजित'। दशवदनस्तस्य पुष्पकविमानं बलान्नेतुमियेष किन्तु कृतेऽपि प्रयत्ने विमान स्वस्थानतो न चचाल। नारदस्य निर्देशानुसार रावणः शिवस्य शरणं जगाम।

व्यायोग एकाङ्क एवास्ति। अस्मिन्नेकाङ्के कविना रङ्गमञ्चे लङ्कारमणीया दृश्यस्थली प्रदर्शिता।

## गिरिसंवर्धनम्

गिरिसंवर्धने कृष्णस्य गोवर्धनधारणस्य कथा वर्तते। अस्य प्रथमाभिनयः सस्कृत-राष्ट्रभाषासम्मेलनाधिवेशने समभूत्।

नन्दस्याज्ञानुसार सुरेन्द्रार्थं यज्ञ-सामग्रीं नयन्तो भारवाहका मार्गे विश्रामार्थं सनृत्यं गायन्ति। कृष्णस्तान् निवारयितु ब्रवीति—

साक्षाद् विहाय मम सन्निधिमिन्द्रतुष्ट्यै
दुष्टा, विमूढमतय, किमु याति यज्ञम्।
मामेव यज्ञपुरुष पुरुहूतवन्द्य
मन्दाशया न वदन्ति विदन्ति सन्त'॥

नन्द-यशोदा-कञ्चुकिप्रभृतिभिरनेकपुरुषै प्रतिषिद्धोऽपि कृष्णः स्वकीयकार्यात् न न्यवर्तत । इन्द्रार्थं यज्ञो नाभूत् ।

सुरपतेराज्ञया क्रोधान्ध सवर्तको वज्रनिर्घोषपूर्वक तत्राजगाम । कृष्णेन सुदर्शनचक्र निक्षिप्तम् । सुरपतिः पराजितो भूत्वा कृष्णस्य शरण-माशिश्रिये ।

प्रस्तावनाया हास्यरसो विदूषकस्याप्रासङ्गिकवार्ताभिर्जायते । सवर्तक-सुदर्शनादीना पात्ररूपेण रङ्गमञ्चे समवतरण छायातत्त्वानु-सारम् । नृत्य-गीतयो प्राचुर्यं सर्वत्रैव लक्ष्यते ।

## कृष्णकौतुकम्

श्रीकृष्ण-कौतुकस्याभिनय' वङ्किमचन्द्र-महाविद्यालयस्य सारस्वतो-त्सवावसरे सम्पन्न' ।

रात्रौ कृष्णस्य वेणुनादं समाकर्ण्य प्रेमविह्वला गोप्यो विपिने त गवेषन्ते । ता गायन्ति, स्तुवन्ति च । कृष्णस्तासां निकटमागच्छति । राधाप्रभृतय समस्ता गोप्य' स्वकीयहृदयप्रदेशे कृष्ण ध्यायन्ति ।

अभिनयः सङ्गीत-वाद्याभ्या प्रपूर्णः । कृष्णो वेणुवादनं करोति । राधा-ललितयोर्गीतेन नाटकस्याभिनयः प्रारभ्यते । समस्तमपि रूपकं परम्परानुसार कृष्ण-स्तुति-निर्भर वर्तते । यथा—

'नीमविटपिपटुचारिन् मधुरमुरलिधर जलधर सुन्दर ।
यमुना-पुलिन विहारिन् ·· · ··· ··· · ।।'

रूपकेऽस्मिन् गद्याशानां न्यूनता पद्याशानाञ्च बाहुल्यं गीतितत्त्वमेव संवर्धयति ।

## पुरुषपुङ्गवम्

पुरुषपुङ्गवमेको भाणो वर्तते । संस्कृत-साहित्य-परिषदः सारस्वतो-त्सवावसरेऽस्याभिनय' सवृत्त । नायकोऽस्य वाग्वीरोऽस्ति ।

वाग्वीरो ग्रामीणनवयुवतिभ्यो विज्ञानमार्गविषयकचेतनाप्रदानाय समुत्कण्ठितो वर्तते । यथा—

का नीतिः परलोकभीतिरहितं या साहस दीपयेत्
को धर्मः निजशर्महेतुरपरे मर्मन्तुदापि क्रिया ।

का पूजा जठराग्नितर्पणमयी का साधुता मौखिकी
स्निग्धा वाक् तदनुच्छलेन कठिना गुप्ताहतिर्वक्षसि ॥

स परस्त्री चारित्र्यरहिता कर्तुं प्रयत्नशीलोऽस्ति, स्वकीया पत्नी तु सर्वदैव परपुरुषदर्शनाद् रक्षति ।

काचिद् ललना तद्गुणाकृष्टमानसा तन्निकटमागत्य प्रणय निवेदयति । तस्मिन्नेवासरे कश्चिद् दुरात्मा तत्रागत्य ता बलादपहर्तुं प्रयतते । परस्य करमागता सा रक्षार्थं वाग्वीरमाह्वयति । वाग्वीर स्त्री-स्वच्छन्द-विहार-समर्थनानुकूल कार्यं दृष्ट्वातीव मुग्धो जात ।

## विधिविपर्यासम्

श्रीजीवकवे विधिविपर्यासमेक प्रहसन वर्तते । अस्याभिनय' पूना नगरेऽखिलभारतीयधर्मविमर्शिनीसभाय" समवेताना विदुषा प्रीत्यर्थं १९४४ खीष्टाब्दे समभूत् ।

विवाह-निषेधको विनोदसुन्दरो युवक स्त्री पुरुषयो धर्मशास्त्र-प्रतिपादितविषमताया विरोधको वर्तते । तस्य सूत्रवाक्य यथा—

एको गर्भ' स्नेहसन्दर्भ एको बीज तुल्य किन्तु मूल्य विभिन्नम् ।
पुत्र प्राप्तस्तात सर्वमन्या पुत्री मूत्रीभावमेतीव घृण्या ॥

घर्घरकण्ठा नाम काचिद् युवतिस्तत्रायाति । तत्र तयोश्चिर पर्यन्तं स्त्रीपुरुषविषयक वैषम्य-विवाद, प्रचलति । विनोदो विज्ञानबलेन स्त्रीपुरुषयोरसमानतामुन्मूलयितु कामयते । जम्बालजिनी महिलानेत्री रङ्गमञ्चमागत्य दशसूत्रीययोजना प्रस्तवीति । ताः यथा—

१ प्रलम्बकेशच्छेदनम्
२ वक्ष'पेषकपट्टबन्धनम्
३ व्यायामाभ्यास
४ मृगयाव्यासङ्ग
५ खड्गचालनम्
६ सेनाया प्रवेशः
७. अवगुण्ठन-त्यागः
८. सम्पत्तौ पूर्णस्वत्वम्

९. सगोत्रासवर्णविवाह
१०. विवाह-बन्धनच्छेदनम् ।

तयो' प्रजननाङ्गमपेक्षमाणस्य कस्यचित् चिकित्सकस्य भयाद् विनोद-घर्घरकण्ठयोस्तत्रैव विवाहकार्यं सवृत्तम् ।

नाटके पात्राणा चारित्रिकविकास कलात्मकविधिना प्रयोजितः ।

## विवाह-विडम्बनम्

विवाह विडम्बन श्रीजीवस्य प्रहसन वर्तते । रूपकेऽस्मिन् भारतीय-समाजस्य कुरीतीना वर्णन विद्यते ।

अत्र रतिकान्त षष्टिवर्षीयो वृद्धो वर्तते । स विवाहायोत्कण्ठितो दृश्यते । घटकेन केनचित्तस्य विवाहस्य पूर्णव्यवस्था कृता । स तत्रागत्य, रतिकान्तमब्रवीत्—'गम्यता कन्या विलोकयितुम्' । कन्या शोभनीया भवेच्चेत्तदा २००० रूप्यकाणि पितु ऋणशोधनार्थं १००० रूप्यकाणि विवाहव्ययार्थं चाविलम्ब प्रदेयानि भवता । भवान् वरकर्तृ-रूपेण कन्या विलोकयतु । वररूपेणाह कञ्चित्तरुण प्रदर्शयिष्यामि । त्व परिणयावसर एव वरपद प्राप्स्यसि । अन्ततश्चैतस्य मूर्खस्य व्ययेन भास्करशर्मा नाम कश्चित् तरुणश्चन्द्रलेखाया' पाणि जग्राह ।

## रामनाम-दातव्य-चिकित्सालयः

प्रणव-पारिजाताख्यपत्रिकाप्रवर्तक सीतारामदासोङ्कारनाथो राम-नाम दातव्य-चिकित्सालयशीर्षक सलापकोटिक निबन्धमेक प्रस्तुतवान् । अयमेव निबन्ध. श्रीजीवेन भाव-ग्रहण पुरस्सर रूपकायित. ।

कश्चिन्मत्तो राम-नाम-दातव्य-चिकित्सालयमुद्घाटितवान् । स सर्वेषा रोगाणा निवारणार्थं रामनामौषधिमेव प्रददाति सततम् । राजयक्ष्म-पीडिता, शर्करारोगक्षीयमाणकाया मधुमेहविमर्दिताश्चैवविधा विभिन्ना रोगिणस्तत्रागत्य रामनामौषधिं गृहीत्वा स्वस्था भवन्ति ।

## साम्यसागरकल्लोलम्

गणनाथः साम्यवादस्य प्रमुखनेतासीत् । स सैन्यसङ्घटनमकरोत् । स सनातनधर्मावलम्बिनं कञ्चित् सन्यासिन लक्ष्यीकृत्य कथयति—

'अरे कपटकचुकधारिन् धर्मं न धर्मध्वजिन न वेद्मि
श्रमार्तदीनान् हृदयेन जाने तेषामसृक्पान-सुपुष्टदेहान्
युष्मान् हि देशस्य रिपून् प्रतीम' ।

स कदाचिदुद्योगकर्मकराणा कदाचित् कृषकाणामान्दोलन सञ्चालयति ।

कश्चिदान्दोलनकारी कर्मकरो बुभुक्षया म्रियमाण आसीत् । साम्यवादिनस्त स्कन्धप्रदेशे निधायावश्यक-वस्तु-क्रय केन्द्र कश्चिदापण जग्मुः । ते तत्रापणसञ्चालक प्रोचुर्यत्त्वयैवान्नमदत्त्वाय भारवाहको मारित. । ते सर्वेऽपि सङ्घीभूय वणिज सर्वस्वमलुण्ठन् । कालान्तरे सर्वेऽपि विप्लवकारिण कश्चित् परिणाममप्राप्य गणनाथाय रुष्टा सञ्जाता. । पश्चात्तापं कुर्वन्तस्ते पथभ्रष्टकारिणो गणनाथस्य वधाय कृतनिश्चया बभूवुः । गणनाथो यतेराश्रम गत्वा स्वकीयप्राणान् ररक्ष ।

## चौर-चातुरीयम्

श्रीजीवेन चौर-चातुरीय प्रहसने चौर्यकलाया विविधनिगूढरहस्यानि निरूपितानि ।

चौर-चातुरीयस्य नायको घटङ्करश्चौर्यकार्ये परमप्रवीणोऽस्ति । राजपुरुषास्तस्य निग्रहार्थं प्रयत्नशीला वर्तन्ते । स कदाचिन्नेत्रहीनस्य कदाचिन्मत्तस्याभिनयं करोति । कदाचिद् राजपुरुषाणा नेत्रेषु तप्तधूलि निक्षिप्य क्षिप्र पलायते ।

द्वितीयसन्धौ कश्चित् साधुर्घटङ्करस्य गृह भिक्षार्थमागच्छति । तस्माद् रूपपरिवर्तिनी विद्यां गृहीत्वा घटङ्करो राज्ञः कृष्णाश्वमेकमपहरति त च श्वेतं कुरुते । तत' तस्योपदेशप्रभावेणासौ चौरवृत्ति विहाय पापाना परिमार्जनार्थ काशीवासञ्चकार ।

रूपकस्यारम्भो घटङ्करस्यैकोक्त्या भवति । प्रस्तुतं प्रहसन प्रबुद्धरौहिणेयमिति मध्ययुगीन-नाटकमनुवर्तते ।

## चण्डताण्डवम्

चण्डताण्डव प्रहसनकोटिक रूपकं वर्तते । नाटकेऽस्मिन् विगतविश्वमहायुद्धे योरपस्य महता राष्ट्राणा १६४२ ईशवीत' १६४६ खीष्टाब्दपर्यन्त हिंसात्मकमनोवृत्तीना नग्ननर्तनस्य निरूपण विद्यते ।

प्रथमाके युद्धार्थिना पारस्परिको वाचिकसङ्घर्षो वर्णित । रूसस्य नेता स्टालिनो धर्म-ध्वसनमुद्घोषयति—

धर्मो नाम कुकल्पनाल्पधिषणप्राणान्तकृद् भीषणो
यन्त्र कि च पुरोधसा द्रविणद दीनार्थविद्राविणम् ।
दौर्बल्य भजतामलीकशरण द्वन्द्वैककन्द नृणा
क्षीणा मानसमोहन स हि कथ नोत्सार्यता मादृशैः ॥

धर्मपुरुषस्तत्रागच्छति । स्टालिनस्तस्य निग्रहार्थ राजपुरुषान् समादिशति । धर्मपुरुषस्तु ज्योतिर्मयो भूत्वा भारतमाजगाम ।

ततो हिटलरो रङ्गपीठमागच्छति । नृत्यज्जम्बीरफलहस्तोऽसौ ब्रवीति—

जम्बीरफलमिव वीर नीरसार वश्य मे धरणितल ह्यवश्यभाव्यम् ।

'विश्वकल्याणमस्तु' इत्यनेन भरतवाक्येनान्ते धर्मस्य विजयो दर्शित ।

चण्डताण्डव प्राच्य-प्रतीच्य-नाटकाना सम्मिश्रण व्यनक्ति ।

## दरिद्र-दुर्दैवम्

जीवेन १९६८ खीष्टाब्दे प्रकाशितस्य दरिद्र दुर्दैवमिति नाटकस्य विषये निगदित यदिद ममान्तिम प्रहसनम् । एतस्याभिनयो महर्षि-वङ्किम चन्द्र-महाविद्यालयस्य देव-भाषा-परिषदो वार्षिकोत्सवे समभवत ।

नायको वक्रेश्वरशर्मा भिक्षा याचते । स छिन्नकर्पट , छिन्न-पादुकः, छिन्नातपत्रश्च वर्तते । कदाचिदसौ तण्डुलान् भिक्षारूपेणानयति । तस्य मन्दोदरी नाम गृहिणी कलह कुर्वाणा भृश खेदयति तम् ।

ग्रीष्मसमयेऽसौ कदाचित् स्वकीयपरिवारस्य सर्वैः सदस्यै सह भिक्षार्थं कश्चिज्जगाम । सर्वे ते तृषाकुला जाता । तेनैव मार्गेण क्षुद्ररामो नाम कश्चिद् वणिग् गम्यमान आसीत् । वक्रेश्वरो तमपि ययाचे किन्तु परमकृपणोऽसौ भिक्षादानार्थं समुद्यतो नाभवत् । 'त्वमपि मत्सदृशो भवेति वक्रेश्वरेणाभिशप्तोऽसौ वणिक् स्वकीयगन्तव्यस्थान जगाम ।

तत कमण्डलुमादाय कश्चित् सिद्धस्तत्राजगाम । दयार्द्रहृदयोऽसौ दारिद्र्योत्पीडितवक्रेश्वराय दिव्यपाश ददन्निजगाद—'एतस्य दिव्यपाशस्य

प्रभावेण यावन्मात्रं धनं त्वया प्राप्स्यते तद्द्विगुणं धनं प्रतिवेशिभिरुपलप्स्यते । सात्त्विकप्रयोगाभावे पाशोऽयं विगलितो भविष्यति ।

नाट्यशिल्पदृष्ट्या नाटकस्यास्याङ्कारम्भो नायकस्यैकोक्त्या भवति । स करुणापूर्णदशामेव सूचयति । रङ्गपीठे त्वाङ्गिकाभिनयः सौष्ठवशाली वर्तते । जीवः शिवस्तुतिसमावेशव्याजेन नाटके गीतप्रयोगं विदधाति ।

## वनभोजनम्

श्रीजीवस्य वनभोजनं प्रहसनकोटिकं रूपकमस्ति । अस्याभिनयो वङ्किमचन्द्रमहाविद्यालयस्य शिष्टमण्डल-प्रीत्यर्थं सम्बभूव ।

कथानुसारं सुप्रिय-देवप्रिय-सुमन्त्र-सुबुद्धिप्रभृतयः षट् छात्राः वनभोजनार्थं सामग्रीं गृहीत्वा गतवन्तः । महतस्तरोरधस्ताद् भोजन-पाकार्थं व्यवस्था सञ्जाता ।

तत्र सर्वैरपि कुतश्चित् पदध्वनिरश्रूयत । सुबुद्धिरब्रवीत्—"शार्दूलस्याक्रमणमवश्यम्भावि वर्तते । यतो हि—

महान् व्याघ्रः कश्चिच् चलविपुललाङ्गूलसहितः

स्तले विभ्रमद्भीमः शमन इव नौ क्रामति पुरः ।

एतत्समाकर्ण्य सुप्रियः पलायितवान् । सुबुद्धिरपि कुत्रचिज्जगाम किन्तु स भिक्षुकरूपेण सन्ध्यासमये तत्रागत्य सर्वमपि भोजनं गृहीत्वा कुत्रचिदगच्छत् ।

वनभोजनस्य प्रस्तावना हास्यमयी वर्तते । मध्ये गीतानां समावेशो हास्यसंवर्धकोऽस्ति । यथा सहजप्राप्तभोजनपरितृप्तो विदूषको गायति—

गहनवने निशिभोज्यं वितरसि तमसि विधूतय जय हे ।

तव चरणागत सततशरणरत-जनमिममुन्नय जय हे ॥

श्रीजीवस्य स्वातन्त्र्यसन्धिक्षणप्रभृतीन्यान्यपि प्रहसनानि सहृदय-हृदयावर्जकानि सन्ति ।



## मूलशङ्करमाणिकलालयाज्ञिकस्य नाट्यसाहित्यम्

मूलशङ्कर-माणिकलालो याज्ञिको गुर्जरप्रदेशे नटपुरग्रामस्य निवासी बभूव। तस्याविर्भाव. ३१ जनवरी १८८६ खीष्टाब्दे समभूत्। अस्य पिता माणिकलाल' माता चातिलक्ष्मी प्रसिद्धावास्ताम्। कविरय बड़ौदा-सस्कृत-महाविद्यालयस्य प्राध्यापक आसीत्।

अनेन नाटककारेण स्वकीयजीवनकाल एव सम्मानोऽधिगत। वाराणमीविद्वत्परिषदा साहित्यमणिरित्युपाधिना समलङ्कृतोऽसौ। याज्ञिकस्य जीवनचर्या तपोमयीति प्रसिद्धि'। अनवरतसाधनाबलेनासौ समुत्कृष्टमाहित्य प्रस्तुतवान्। कविवरस्य देशानुरागस्तद् युगीन-नवजागरणस्य प्रेरक आसीत्।

याज्ञिकस्य प्रताप-विजय. सयोगितास्वयवरं छत्रपति-साम्राज्यञ्चेति त्रीणि नाटकानि बडौदात प्रकाशितानि, प्रयागविश्वविद्यालयस्य पुरतकालये चोपलभ्यानि सन्ति।

### प्रताप-विजयम्

प्रतापविजयस्य प्रणयन १९२६ खीष्टाब्दे सञ्जातम्। नाटकेऽस्मिन नवाङ्का सन्ति।

कथानुसार मानसिह प्रताप कथयति—अनेके सामन्ता अकबर-स्याधीनता स्वीचक्रु'। सम्प्रत्यकबरस्य निखिल-सामन्त प्रधानपदम-लङ्करोतु भवानिति। प्रतापोऽब्रवीत्—'सूर्यवशोद्भवो राजा कथमेव विधास्यति'। भोजनसमयेऽपि मानसिहोऽपमानित। क्रोधान्धो मानसिहो दिल्ली गच्छन्नेवमवादीत्—

'सद्य' समेत्य शमयामि तवावलेपम्।'

सद्यो मानसिहस्य प्रयासेन हल्दीघाटीस्थानेऽकबरसेनया सह प्रतापस्य भीषण युद्धमजनि।

द्वितीयाङ्के प्रतापस्य भल्लप्रहारेण मानसिहस्य मृत्युः सूचित'। तृतीयाङ्के रङ्गपीठेऽकबरप्रभृतयो दृश्यन्ते। षण्मासपर्यन्तमन्वेषणेनापि

प्रतापस्य निवासस्थानं न ज्ञातमकबरेण। प्रतापस्य निग्रहार्थं गुप्तचरा नियोजिता सन्ति।

चतुर्थांकेऽकबरस्य भेदनीति प्रपञ्चिता। कश्चिद् दूत. प्रतापामात्यं प्रलोभयति यद् भवान् राज्यविहीनमासन्नमृत्यु प्रताप विहायाकबरस्य शरण गत्वा चिरकालपर्यन्त राज्यसुख भुञ्जताम्।

पञ्चमाके पृथ्वीराजस्य भगिन्या अमरसिंहेन सहानुरागस्य वर्णनमस्ति। प्रताप. स्वकीयशिशूना दु.खमसहमानोऽकबरस्य शरण-माजिगमिषुर्वर्तते किन्तु पृथ्वीराजस्य प्रबोधनेन नैव कृतवान्।

अष्टमाके वन्यजीवनखिन्न कुमार कुम्भलगढ़-दुर्ग प्रासादे-वासमभिलषति। नवमांके विजयमहोत्सवसमारम्भस्य वर्णन विद्यते।

शङ्करस्य शैली नाट्योचितसरलता भजते। प्रकृतिचित्रणविषये कवेर्दृष्टि पारम्परिकी।

याज्ञिकेन नाटके परमोच्चकोटिक सङ्गीतमुपस्थापितम्। प्रस्तावनाया नटी गायति—

'सुखयति मधुररसा सरसी सारसहसविहङ्गममिथुन विहरति मृदुरहसि'।

प्रतापविजये प्राकृतस्य प्रयोगो न कृत। सर्वाणि पात्राणि सस्कृत-माश्रित्य व्यवहरन्ति।

## संयोगिता-स्वयंवरम्

मूलशङ्करस्य द्वितीय नाटक सयोगितास्वयवर १९२८ खीष्टाब्दे प्रकाशितमभूत्। अस्याभिनयो राजसूययज्ञावसरे समवेताना नरपतीना मनोरञ्जनार्थमभवत्।

कन्नोजाधिपतिर्जयचन्दो राजसूययज्ञ कुर्वाणोऽस्ति। तेन दिल्लीश्वर पृथ्वीराजोऽप्यामन्त्रित' किन्तु पृथ्वीराजः पत्रद्वारा त राजसूययज्ञस्यानधि-कारिण सूचयति।

जयचन्दो राजसूययज्ञावसरे स्वकीयकन्याया सयोगितायाः स्वयवर कर्तुमभिलषति। सयोगिता पृथ्वीराजे बद्धानुरागा वर्तते। क्रोधान्धेन पित्रा सा गङ्गातटे वनदुर्गे कारागारे प्रेषिता।

प्रेमविह्वलहृदया सयोगिता मदनलेख लिलेख त च मदनिकाद्वारा पृथ्वीराजसन्निधौ प्रेषितवती। तत्रेद लिखितमासीत्—

निर्घृणमनसिजविशिखैर्विलुप्यमाना त्वदाश्रयामबलाम् ।
प्राणेश्वर परिपालय परमशरण्य' श्रुतस्त्वमार्तानाम् ।।

पृथ्वीराजोऽप्येतत्पठित्वा स्नेहपरायणो जात । तेनापि निम्नाङ्कित प्रणयपत्रमेक तदन्तिक प्रेषितम्—

अयमागतो जनस्ते प्रणयपरवश स्मरोषित शरणम् ।
को नु यदृच्छोपगत पीयूषरस न सेवते दयिते ।। ३. १३

पृथ्वीराज छल-प्रबन्धरचना विधाय कर्णाटकीसाहाय्येन सयोगिता-बन्दीगृहान्तिक गच्छति । तत्र दुर्गाभ्यन्तरे तयोर्विवाह सवृत्त । सयोगिता सत्वरमश्वारूढस्य पृथ्वीराजस्याङ्कमाश्रित्य गतवती । प्रतिक्रियार्थं समुपस्थिता जयचन्दस्य महती सेना तेन सपद्येव मृत्युपद प्रापिता । अन्ततोगत्वा जयचन्द स्वयमेव पृथ्वीराजाय कन्यादानार्थं समुत्कण्ठितो जात' । स पृथ्वीराज प्रशसति—

मिथोऽनुरागाभ्युदयप्रहर्षित, स्वयवरा मे तनयां समर्प्य ।
सम्राट स्वयं विक्रमशालिने ते कृतार्थतामद्य गतोऽस्मि सान्वय ।।

सयोगितास्वयवर विशशतकस्य श्रेष्ठ नाटकं वर्तते ।

## छत्रपति-साम्राज्यं

छत्रपति-साम्राज्य नाटक शिवाजीमहोदयस्य १६४६ ईसवीत: १६७४ खीष्टाब्दान्त शासनस्य घटना समवलम्ब्य प्रणीतम् । नाटकेऽस्मिन् प्रथमांके साम्राज्योपक्रमोऽस्ति । यवनाधिपतिरत्याचारी वर्तते । शिवाजी स्वतन्त्रसाम्राज्यस्य स्थापना विधातु-काम । सर्वे धर्मस्य रक्षार्थं हिन्दू-साम्राज्यस्थापनार्थ सहमता बभूवु । तोरणदुर्गस्य रक्षकेण स्वकीयदुर्ग शिवाजीमहोदयाय समर्पित. । कस्यचिज्जीर्णमन्दिरस्योत्खननेन शिवराजेनातुल धनमुपलब्धम् । धनेनानेन बहूनि शस्त्राणि विदेशतोऽपि क्रीतानि । सपद्येवानेन कल्याणनगर विजितम् । बीजापुरस्य सप्त शतानि सैनिका यवनराज विहाय शिवाजींसन्निधावाजग्मु । बीजापुराधिपति कपटप्रबन्धेन शिवाजीमहोदयं निग्रहीतु तत्राजगाम किन्तु सावधान शिवराजो व्याघ्रनखजालेन तमेव यमनगरातिथि चकार ।

पञ्चमेऽङ्के बाजीवीर शत्रुभि समर कुर्वाणोऽमरभुवन प्रयाति । षष्ठेऽङ्के छल-प्रबन्धोऽस्ति । शिवाजी तत्सहचराश्च वरयात्रिणो भूत्वा

मुगलसैनिकान् जघ्नु । सप्तमाङ्के शिवाजी-जयसिंहयो मेलनं वर्तते। प्रयाण-प्रबन्धनामकेऽष्टमेऽङ्के शिवाजी मुगलराजेनौरङ्गजेवेन बन्दीकृत । शिवाजी मिष्टान्नपात्रे निगूढो बहिर्निर्जगाम। नवमेऽङ्के शिवाजी द्वारा पञ्चदुर्गाणा विजयस्य वर्णन प्राप्यते। दशमेऽङ्केऽभिषेकमहोत्सवो वर्णित.।

एतस्य नाटकस्य विषये देशीयाना विदेशीयाना च बहूना विदुषा सत्सम्मतय सन्ति।



# महालिङ्गशास्त्रिणो नाट्यसाहित्यम्

महालिङ्गस्य जन्म १८९७ खिष्टाब्दे समभूत् । तञ्जौर मण्डल-वास्त-व्येन कविना प्रतिराजसूयनाटकस्यान्ते निजवशस्य परिचयो लिखित. ।

शास्त्रिणा काव्य-कथोपन्यास सङ्गीत-ललितकलाविषयका अनेके ग्रन्था विरचिता' । अस्य नाट्य साहित्य तु सारस्वतसारावताररूप वर्तते । केषाञ्चित्प्रसिद्धनाटकाना परिचयोऽधस्तादुपस्थाप्यते ।

## उद्गातृ-दशाननम्

उद्गातृ दशानन नाम नाटक परमेश्वरस्य कृपा-प्राप्ति-साधनमिति प्रमाणयति सूत्रधार । रूपकस्यास्य क्रीडास्थली हिमालयप्रदेश' ।

द्वारपालो नन्दी स्वसहचर भृङ्गिरिटि शिव-पार्वत्योर्वैमनस्यविषये ब्रवीति । एतत्सर्व रहस्यवार्ता शृण्वन्ती विजया प्रति शिवस्य शाप' प्रवर्तित: ।

अत्रान्तरे राक्षसास्त प्रदेशमाचक्रमु । विनायक-स्कन्दाभ्यां शिवपुत्राभ्या सपद्येव दशवदनपीडितकुबेरस्य दैन्यसमाचार' परिज्ञात' । कुबेरप्रभृतय सर्वेऽपि यक्षा' सुरेन्द्र पुरस्कृत्य शिवस्य शरणं जग्मु ।

द्वितीयाङ्के रावण कुबेरस्य सिहासने विराजमानोऽस्ति । तृतीयाके राक्षसैर्यक्षदूतो निगृहीतो रावणान्तिक चानीत । ततो नारदेन रावण' शिवेन सह योद्धु प्रेरित' । दशवदन पुष्पकविमानेन शिव जेतुं प्रतस्थे । स तत्र गत्वा कैलासपर्वतमुत्थापयामास । शिव' पादाङ्गुष्ठबलेन पर्वत पुनरपि स्थिरीचकार । कम्पमानपर्वते स्थिता पार्वती भयातुरा सती सत्वरमेव मान तत्याज । तथा हि—

कैलासाद्रेस्तोलनं तावदास्ता तेनैवास्मिन् दृष्टवीर्ये प्रतुष्येत् ।
त्रस्ता देवी मानमुत्सृज्य कण्ठ जग्राह स्थाणुरन्त: समोद ।।

अभिनये रङ्गमञ्चो विचित्ररूपधारिपात्रैर्मण्डितोऽस्ति । छायात्मक-पात्राणा विचित्रता अस्ति ।

## प्रतिराजसूयम्

महालिङ्गस्य प्रतिराजसूय नाटक १९५७ ख्रीष्टाब्दे प्रकाशितम्। सप्तस्वङ्केषु विभक्तस्यास्य नाटकस्योपजीव्य महाभारतस्य वनपर्व वर्तते।

नाटकेऽस्मिन् विदुरप्रवेश, अक्षयपात्रोपलब्धि', सुदर्शन-प्रवेश, दुर्वाससोऽभ्यागमन, राजकुले दुर्वासा, अर्जुनस्यागमन, पुलाकपरिपाक, अभिमन्योश्चाभिसन्धिर्वर्णितानि।

## आदिकाव्योदयम्

महालिङ्गस्यादिकाव्योदय रूपक प्रकरण वर्तते। रूपकस्यास्य प्रणयन १९४२ ख्रीष्टाब्दे समापन्नम्।

कथानुसार काचिद् दिव्याङ्गना शिशुद्वय वाल्मीकेः संरक्षकत्वे निहितवती। वाल्मीकिर्ध्यानबलेन निखिलमपि वृत्तान्त ज्ञातवान्। द्वितीयांके वाल्मीकिर्भरद्वाजश्च तमसायास्तीरे विराजमानौ स्त। तत्र रमणीयेऽरण्ये कश्चिन्निर्दयो निषादो बाण-प्रहारेण क्रौञ्चमिथुनादेक-मवधीत्। वाल्मीकि स्तं मा निषादेति श्लोकेनाभिशशाप। सपद्येवा-काशवाणी बभाषे—

'कुरु रामायण कृत्स्न श्लोकैर्बद्ध मनोहरम्'।

तृतीयेऽङ्के रामायणप्रणयनस्य सूचना सम्प्राप्यते। कुश-लवौ तत्कण्ठाग्रीकृत्य गायत'। चतुर्थांके स्वर्णमयीसीतासहायो रामोऽश्वमेध-यज्ञानुष्ठाननिरतोऽस्ति। षष्ठेऽङ्के पुत्तलिकानृत्यस्य समावेशो वर्तते। सप्तमेऽङ्के गर्भाङ्कस्य समावेशोऽस्ति। अष्टमाङ्के भीषणयुद्धस्य नवमेऽङ्के रात्रौ विभीषणहनुमतोर्वार्तालापस्य च वर्णनमुपलभ्यते।

## कौण्डिन्य-प्रहसनम्

कौण्डिन्यप्रहसने नान्दीत एव प्रेक्षकहास्यसवर्धिनी प्रवृत्तिर्दृश्यते। कवि' शष्कुली-कवितयो' समानास्वाद्यता प्रतिपादयति।

प्रभाते द्वादशी-पारणानन्तर गृध्रनासोऽपराह्ण-भोजनार्थं चिन्ताकुलो बभूव। स भिक्षार्थं बहिर्गच्छति।

द्वितीयाके कौण्डिन्यनामक परान्नव्रत गृध्रनास व्यलोकयत्। स तस्य गृहमगच्छत्। तद्द्वारद्वेश गत्वा गायतिस्म—

परगृहभोजनपरितुष्टाना नित्यातिथ्योत्सवनिष्ठानाम्।
कालत्रयविरतोद्योगाना किं च समेतामितभोगानाम्।
गृहमेधिनिमन्त्रणचित्तानां षड्रसभरिताशनमत्तानाम्॥ २.१५

एव गायन्नसौ पृष्ठद्वारतोऽन्त' प्रविश्य तस्य भोजन खादितवान्।

नाट्यकथाया सविधान हास्यकर वर्तते। संवादः सरल सुबोध-भाषायामतीवमनोग्राही सञ्जात।

## कलि-प्रादुर्भावम्

कलि-प्रादुर्भाव नाम नाटक १६५६ खीष्टाब्दे प्रकाशितम्। कथानुसार द्वापरयुगस्यान्तिमदिवस आसीत्। कात्यायनमिश्र' स्वकीयक्षेत्र कस्मैचिद् वैश्याय विक्रीणाति। क्षेत्रमुत्खनता वैश्येन निधि' सम्प्राप्त'। स प्रथमदिवसे त निधि ब्राह्मणसर्वस्व मत्वा तस्मै दातु समुद्यतो बभूव। ब्राह्मणोऽपि त स्वीकर्तुं नैच्छत्। अपरस्मिन् दिने कलियुगागमनप्रभावेण बुद्धि-परिवर्तनेन तौ द्वावपि निधिप्राप्त्यर्थ कलह चक्रतु। अधिकरणिक-स्याज्ञानुसार निधिर्नरपतये समर्पित क्षेत्र च ब्राह्मणाय प्रत्यर्पितम्।

कविनानेन शृङ्गारनारदीयम् उभयरूपकम्, अयोध्याकाण्ड, मर्कट-मार्दलिकप्रभृतीनि नाटकान्तराण्यपि प्रणीतानि।



# रतिविजयम्

रतिविजयस्य लेखको रामस्वामीशास्त्री न्यायाधीश आसीत् । कुम्भकोनमवास्तव्येनानेन १६२८ खीष्टाब्दे नाटकमिद विरचितम् । कवेर्विशेषता नाटकस्य भरत-वाक्येन सुस्पष्टा भवति । यथा—

'देशोऽय भारताख्य प्रथितसुखमयो धर्ममूल च भूयात् ।
वैषम्य ,रागजन्य भवतु च शमित देशभक्तिप्रभावात्' ॥

अनेन प्रतीयते यदय सुसस्कृत सहानुभूतिपूर्णश्च नागरिक आसीत् ।

अत्र वसन्त शिवदग्ध भस्मावशेष मदन विलोक्यातीव सन्तप्तोऽस्ति । प्रियतमावरह्विधुरा रतिरपि तस्यैव पुरत करुणक्रन्दन प्रारेभे—

स्मरामि नित्य परिपूर्णचन्द्रप्रभासमानद्युतिवक्त्रबिम्बम् ।
लीलावलोक मधुर कटाक्ष सुधामय तस्य समन्दहासम् ॥ १. ३८

द्वितीयाङ्कानुसार मदन दहनेनाव्यवस्था समजनि । तृतीयाके हिमालयशिखरे तपस्विनी रति. पार्वतीप्रीत्यर्थ दुस्सह तपश्चचार । तत्तपस्तुष्टा जगद्धात्री परमेश्वरी ता प्रत्याह—

'दीर्घसुमङ्गली भव । त्वत्प्रार्थनापूरणाय परमेश्वर प्रति तप. करोमि' । चतुर्थेऽङ्के शिवो नैष्ठिकब्रह्मचारी वर्तते । पञ्चमाके पार्वतीपरमेश्वरयोर्विवाहस्य वर्णन विद्यते ।

किरतनिया नाटकस्य प्रभावानुसार रतिविजय गीतबहुल वर्तते । नाटकेऽस्मिन् प्रवेशक-विष्कम्भादीनामभाव । प्रतीकपात्रैर्लोकानुरञ्जन सविशेष वर्तते । एकस्मिन्नेवाके सर्वाणि पात्राणि रङ्गपीठतो निर्गच्छन्ति । चतुर्थाङ्के पार्वत्या शिवनिन्दाप्रत्याख्यान प्रकरणस्य तुन्दिलता व्यनक्ति ।

## भ्रान्त-भारतम्

भ्रान्तभारतस्य लेखका गोकुलदास-संस्कृतमहाविद्यालयस्य छात्रा' सन्ति । छात्राणां विबुधवाग्विलासिनी नामैका सभाप्यस्ति ययास्य नाटकस्य प्रकाशन विहितम् । लेखकाना धारणानुसार भारत भ्रष्टं भवदास्ते । यथोक्त नान्द्याम्—

मातस्त्वदीयचरणौ शरण सदास्तु भ्रान्तस्य भद्रविमुखोद्यतभारतस्य ।
सत्सङ्गतोऽभवदिद सुरराजपूज्य वर्ष विमोहऋषिराजनिवासभूमिः ॥

नागेशपण्डित , शालिग्रामद्विवेदी, अच्युतपाध्ये चैतस्य नाटकस्य लेखकाः सन्ति ।

अत्रारम्भे नारदो रङ्गमञ्चमागच्छति । स आधुनिकताप्रवण भारत-मनुशोचति । तच्छिष्यो वस्तुस्थित्या सुपरिचितोऽस्ति । स स्पष्टमेव निगदति—

पर्वतो वाथ पुरुषो दूरादेव हि शोभते ।
किंवदन्ती कृतार्थास्मिन् देशे भारतसञ्ज्ञके ॥

संस्कृते सुरक्षा वैदेशिक-शिक्षा-बलेन विधातु न शक्यते । नारद. कथयति—

'मूलमुच्छिद्य चेच्छेत् को विद्वान् वृक्षस्य रक्षणम्' । ततो विवाहायु-रधिकृत्य तर्क-वितर्का जायन्ते ।

संवादाना शैली सरला रमणीया चास्ति । भाषा बलवती वर्तते । नाटके विविधा भाषा. प्रयुक्ता । प्राकृतस्य स्थान हिन्दीभाषयाधिष्ठितम् ।



## जग्गू श्रीवकुलभूषणस्य नाट्यसाहित्यम्

जग्गूवकुलभूषणो दक्षिणभारतस्य यादवाचलनामके स्थाने १६०२ ख्रीष्टाब्दे जन्म लेभे। कविरयं पञ्चदशरूपकाणि व्यरचयत्। तेषु कानिचिदधस्ताद् व्याख्यायन्ते।

### अद्भुतांशुकम्

अद्भुतांशुकस्य रचना १६३१ ख्रीष्टाब्दे सञ्जाता।

दिग्विजयानन्तरं युधिष्ठिरस्य राजसूययज्ञो भीमस्यानागमनकारणादवरुद्धोऽस्ति। भीमो दुर्योधन-दुःशासन-शकुनि-कर्ण-सहितान् विविधान् वीरान् बन्दीविधाय युधिष्ठिरसमक्षं समानीतवान्। युधिष्ठिरस्तान् सर्वान् बन्धनरहितांश्चकार।

कृष्ण-बलरामावपि यज्ञभूमिं समागतौ। सर्वेऽपि जना लज्जावनतमुखं दुर्योधनं पश्यन्ति स्म। भृशं पीडितमानसो दुर्योधनः शकुनिं नाम मातुलमब्रवीत्—

पाण्डवानां वशीकृत्य सर्वां सम्पदमद्भुताम्।
मद्वशे दासभावं च तेषां कल्पय मातुल ॥ २. १०

प्रत्युत्पन्नमतिः शकुनिर्द्यूतक्रीडया युधिष्ठिरं पराजित्य पाण्डवानां सर्वस्वापहरणस्य प्रणं चक्रे। निर्धारितसमये तयोर्योजना कार्यान्विता।

नाटकेऽस्मिन् रङ्गपीठमागम्यमानस्य पुरुषस्य वर्णनं किरतनियानाटकानुरूपं वर्तते। प्रथमाङ्के युधिष्ठिरः कृष्णं वर्णयति—

योगिध्येयो नवघनरुचिः पुण्डरीकायताक्षो
रक्षा-दीक्षावहननिरतः पीतवस्त्राञ्चिताङ्गः।
लक्ष्मीक्रीडामरकतगिरिर्भक्तकल्पद्रुमोऽयं
श्रीकृष्णो मे हरति नयने कोऽस्ति धन्यो मदन्यः ॥ १ ११

रूपके संवादा नाट्योचिताः प्रतीयन्ते। हास्यकरी प्रवृत्तिरपि परमोत्कर्षशालिनी। यथा,

भीमः—'क्व डीयते शकुने। गृहाण तं पञ्जरे स्थापयामः।'

अर्जुनः—'एनं महाराजदुर्योधनस्य मातुलं ब्रवीमि, न तु पतगम्॥'

अद्भुतांशुके छायातत्त्वस्य विनिवेश सफलो वर्तते। भीमस्य स्त्रीरूपधारण, कृष्णस्य च दुर्वाससः शिष्यभावः च छायातत्त्वं सवर्धयत ।

नायकाना चरित्र-चित्रणे कवि सफलोऽस्ति। रङ्गपीठे रथयात्राया दृश्यमपि मोहकतरं वर्तते। सूक्ति-सम्भारस्त्वतीवरोचकोऽस्ति।

यथा—

१ आशा-पोषिता खलु स्त्रीबुद्धि ।

२ उभयत॰ पाश॰ ।

३ अट्टालिकादध पतितस्योपरि लगुडाघात॰ ।

## प्रतिज्ञा-कौटिल्यम्

भगवतः सम्पत्कुमारस्य हीर-किरीटोत्सवदर्शनार्थ विविध-प्रदेशागत-विदुषा प्रीत्यर्थं प्रतिज्ञा-कौटिल्यस्य प्रथमाभिनयो जात ।

अमात्यवक्रनासोऽमात्यराक्षस ब्रवीति यद् वृद्धो राजा सर्वार्थसिद्धि-मौर्यं राजसिंहासनारूढ विधाय वानप्रस्थाश्रमे प्रविविक्षुरस्ति। राक्षसो नन्दप्रिय आसीत्।

नन्द॰ स्वजनकस्य मौर्याभिषेकवार्ता श्रुत्वा विस्मितोऽभवत्। स मौर्यस्य विनाशाय चिन्तापरायणो वर्तते। राक्षसस्तु रक्त-प्रवाह विनैव सरलोपायेन नन्दस्य राज्याभिषेकाय युक्ति चिन्तयति।

महाराजेन सर्वार्थसिद्धिनाहूतो राक्षसस्तदन्तिकं जगाम। मौर्यस्य शोभायात्रावसरे सेना सुसज्जिता। सेनापतिरपि मौर्यस्य पट्टाभिषेक नाभिलषति। सुगाङ्गप्रासादे राजा राक्षससमक्ष मौर्यस्याभिषेकाकाङ्क्षा प्रकटयति। मौर्योऽपि तत्रागच्छति।

किञ्चित्समयानन्तरं सेनापतिस्तत्रागत्य ब्रवीति यन्मौर्य शतपुत्रै॰ सह स्वयप्रादुर्भूतया दुर्गया पञ्चत्व प्रापित ।

मौर्यपुत्रश्चन्द्रगुप्तः सुरक्षित आसीत्। राक्षस-नन्दावतीवचिन्तिता-वास्ताम्। फलतो नन्दस्य राज्याभिषेको जातः।

तृतीयाके चन्द्रगुप्त आत्मरक्षार्थ कानन प्रविवेश। तत्र तस्य चाणक्येन सार्द्धं परिचयो जात । तस्य दयनीयदशा दृष्ट्वा दयार्द्रहृदय-श्चाणक्यस्तस्य राज्याभिषेकार्थं प्रतिज्ञातवान्। कूटनीतिप्रयोगेणासौ नन्दं निहत्य चन्द्रगुप्तस्य राज्याभिषेक चकार।



रङ्गपीठमागच्छतां पात्राणां हाव-भावालङ्करणादिवर्णनमभिनयकला-विरुद्धं मन्यते । प्रतिज्ञा-कौटिल्येऽप्येतद् दृश्यते । समग्रमपि नाटकमारभटी-वृत्ति-परायणं वर्तते ।

विशशतकेऽपि कविरयमनावश्यकशृङ्गारादुन्मक्तो न दृश्यते । चतुर्थेऽङ्के पाटलिपुत्रवर्णनाया विट-वेश्याना शृङ्गारचर्चा समुचिता न प्रतिभाति ।

रूपकेऽस्मिन् छायातत्त्वस्य प्राचुर्य्यमुपलभ्यते । चन्द्रगुप्तो वटुवेश धृत्वा सिंह विद्रावयति । मानसिक छायातत्त्व चन्द्रगुप्तचाणक्ययोर्व्यक्तित्वेऽपि लक्ष्यते । सप्तमाके रङ्गमञ्चे पर्वतेश्वरविषकन्ययोः प्रणयालापो नवीनदृष्ट्या रमणीयताधायकोऽस्ति ।

कविर्बहुषु प्रसङ्गेषु स्वाभाविकोत्प्रेक्षाभि सूचयति यत् प्रकृतिरपि भावि-कार्यक्रमस्य योजनाया सहयोगिनी वर्तते । यथा—

रक्तो विभाति चरमाद्रितटेऽर्कबिम्बः
कालद्विजेन पटुना हि समूह्यमान ।
पट्टाभिषेचनकृते तव शातकुम्भ-
कुम्भो महानिव जलाहरणाय सिन्धो' ॥ ८ १२

## मञ्जुल-मञ्जीरम्

मञ्जुलमञ्जीरं नाम रामचरितात्मक नाटकमष्टस्वङ्केषु सविभक्तम् । कवे' पितृव्यस्य वेङ्कटाचार्यस्य मतानुसारं प्राचीनानि रामचरितात्मकानि नाटकानि पद्यानामधिकतया वर्णन-बाहुल्यकारणाच्च चम्पू काव्यानुकारीणि वर्तन्ते । किन्त्वेतद्दोषपरिमुक्तमस्ति मञ्जुलमञ्जीरम् ।

## प्रसन्नकाश्यपम्

प्रसन्नकाश्यपे त्रयोऽङ्का सन्ति । रूपकेऽस्मिन् पुत्रस्य राज्याभिषेकानन्तरं काननमागता दुष्यन्तद्वितीया शकुन्तला विलोक्य प्रमुदितस्य काश्यपस्यानन्दस्य वर्णन विद्यते ।

यथाह सूत्रधार'—

सदारस्सकुमारश्च कण्वाश्रमदिदृक्षया ।
आयाति स्यन्दनेनासौ दुष्यन्त' कौतुकी वनम् ॥

राजा दुष्यन्तः शकुन्तलया भरतेनात्मजेन च सह कण्वाश्रमं

प्रविशति। तत्रैते मृगशावकेन क्रीडन्तमनसूयातनयं विलोकयन्ति। शकुन्तला तस्मै ददाति।

द्वितीयाङ्के शकुन्तला प्राक्तनसहचरीभि गौतम्या च सार्द्धं स्थित्वा स्वकीय निखिलमपि वृत्त निगदति। तृतीयाङ्के राजा शकुन्तला च कण्व साक्षात्कुरुत। मेनकापि तत्रायाता।

सकलापि कथा कल्पितास्ति। नेद विशुद्ध नाटकम्। नात्र कार्यावस्था' न च फलागम प्रयत्नसाध्योऽस्ति। सवादाना रमणीयता विलक्षणैवास्ति। रूपकमाद्योपान्त मनोरञ्जनसामग्री-निर्भर वर्तते।

## अप्रतिमप्रतिमम्

अङ्कद्वयनिबद्धेऽप्रतिमप्रतिमे धृतराष्ट्रद्वारा स्वकीयपुत्राणा हत्यायाः प्रतिशोधार्थं भीममूर्तेर्विभञ्जन वर्णितम्।

महाभारतीययुद्धस्य समाप्तौ कृष्णो धृतराष्ट्रादनर्थशङ्कया पर्याकुलोऽस्ति। स भीम धृतराष्ट्रसान्निध्याद् दूरमेव स्थातु निर्दिशति। युधिष्ठिरप्रभृतय सर्वेऽपि पाण्डवा कृष्ण पुरस्कृत्य धृतराष्ट्रस्याभिनन्दनार्थं प्रतस्थिरे। कृष्णो भीम पारिजातमालार्थं द्वारका प्रेषयामास। अभिनन्दन-समारोहे हृदयनिहितकपटो धृतराष्ट्रो भीममालिङ्गितुमियेष। कृष्णेन लौहमयी भीमप्रतिमा तस्मै समर्पिता। स ता मूर्तिमालिलिङ्ग बभञ्ज च।

प्रस्तुतरूपके भीमस्य यन्त्रचलितप्रतिमाया प्रकरण छायानाट्यानुसार वर्तते।

कविनानेन प्रतिज्ञाशान्तनवम्, अनङ्गदाप्रहसन, मणिहरण, यौवराज्य, बलिविजयनाटकम्, अमूल्यमाल्यञ्चेति प्रणीतानि नाटकानि।

## रमानाथमिश्रस्य नाट्यसाहित्यम्

रमानाथमिश्रस्य प्रतिभाया विकास उत्कलस्य विद्वन्मण्डितबालेश्वर-नगरे सञ्जात । एतस्मान्नगरान्नातिदूरे मणिखम्भनामके ग्रामेऽसौ १६०४ खीष्टाब्दे जन्म लेभे ।

अनेनानेकरूपकाणि विरचितानि । तेषु चाणक्यविजयं, पुरातन-वालेश्वर, समाधानं, प्रायश्चित्तम्, आत्मविक्रयं, कर्मफल श्रीराम-विजयञ्चेति सुप्रसिद्धानि ।

### चाणक्यविजयम्

चाणक्यविजयं कवे श्रेष्ठतम रूपकम् । अस्मिन् पञ्चाङ्का विद्यन्ते । नाटकमिद् १६३८ खृीष्टाब्दे विरचितम् । अस्याभिनयोऽखिलभारतीय-प्राच्य सम्मेलनस्य विंशतमेऽधिवेशने भुवनेश्वरे सञ्जात ।

मुद्राराक्षस नाम नाटकमस्योपजीव्यमस्ति, तथापि कविनेदं विलक्षणप्रतिभाबलेन नूतनरूपपरिमण्डितं कृतम् । अस्मिन् रूपके नन्दवधस्य चन्द्रगुप्तराज्याभिषेकस्य च वर्णनमुपलभ्यते ।

### श्रीरामविजयम्

श्रीरामविजये नाटके पञ्चाङ्का' सन्ति । रूपकेऽस्मिन् ताडकावधतो रावणवधपर्यन्त कथास्ति ।

### समाधानम्

समाधानं पञ्चस्वङ्केषु सविभक्तम् । रूपकेऽस्मिन् योरपीयपद्धति-मनुसृत्य छात्राणां गन्धर्वरीत्या वैवाहिकसमस्याया' समाधानं प्रस्तुतम् । कवेरितराण्यपि रूपकाणि रमणीयानि सन्ति ।



## मथुराप्रसाददीक्षितस्य नाट्यसाहित्यम्

उत्तरप्रदेशे महामहोपाध्यायो मथुराप्रसाददीक्षितो हरदोई-मण्डलान्तर्गते भगवन्तनगरे १८७८ खीष्टाब्दे प्रकटयाम्बभूव। पण्डितवर्यो बदरीनाथ, कुन्ती चास्य पितरावास्ताम्।

मथुराप्रसाद छात्रजीवनत एवात्माभिव्यक्तौ प्रौढ आसीत्। शास्त्रार्थायाप्यस्य महत्यभिरुचिरासीत्। 'पृथ्वीराज-रासो' नामकस्य ग्रन्थस्य सम्पादन-साफल्येन कविरय महामहोपाध्यायोपाधिना मण्डित। दीक्षितस्य प्रकाशितेषु रूपकेषु भारतविजय, वीरप्रताप, भक्तसुदर्शन, शङ्करविजयं, पृथ्वीराजविजय, गान्धीविजय, भूभारोद्धरणञ्चेति विश्वप्रथितानि सन्ति।

### वीरप्रतापम्

सप्तस्वङ्केषु सविभक्त वीरप्रताप नाम नाटक १९३५ खीष्टाब्दे विरचितम्।

प्रताप स्वजनकस्य ज्येष्ठपुत्र आसीत्। तथापि पिता तस्य राज्याभिषेक नैच्छत्। सर्वेषा सामन्ताना सत्प्रयासेन प्रतापस्य राज्याभिषेको जातः। सिंहासनारूढेन प्रतापेन सपद्येव मातृभूमे' स्वातन्त्र्यार्थं प्रतिज्ञा चकार—

यावन्मे धमनीमुखेषु रुधिरक्लेदोऽपि सन्तिष्ठते।
मास वास्थनि तिष्ठति क्वचिदपि प्राणाः शरीरे स्थिता ॥
तावन्म्लेच्छपते' कथचिदपि न प्राप्स्याम्यह निम्नताम्।
स्वातन्त्र्यस्य पद समस्तवसुधां नेतु यतिष्ये भृशम् ॥ १.२६

नाटकेऽस्मिन्नेकोक्तीना प्रयोगो बाहुल्येन प्राप्यते। भारतीय-स्वातन्त्र्य-सङ्ग्रामावसरे युवकाना प्रोत्साहनार्थं भारतमातुश्च बन्धन-विमुक्त्यर्थमेवास्य रचना विहितेति सुस्पष्टमेव प्रस्तावनायाम्। भाषा कोमलकान्तपदावलिसवलितास्ति।

### भारतविजयम्

भारतविजयस्य प्रणयन १९१४ खीष्टाब्दे सञ्जातम्। अस्य सर्वप्रथमाभिनयो १९३७ खीष्टाब्दे सोलनस्य राजसभायाः प्रीत्यर्थं समभूत्।

नाटकमिदमैतिहासिक वर्तते। आङ्ग्लानां भारतप्रवेश-प्रशासन-भ्रष्टाचार-दुर्नीति-कुकृत्य-दमन-लुण्ठनसम्बन्धिनीनां घटनानां वर्णनं लभ्यतेऽस्मिन् नाटके।

पञ्चमाङ्कतो भारतस्य स्वातन्त्र्यसङ्ग्रामस्य वर्णनं महत्त्वपूर्णं वर्तते। षष्ठेऽङ्के काँग्रेसस्य स्थापना दृश्यते। ततो वङ्गभङ्गो जातः। तन्निरसनार्थं देशप्रेमिणो घोरक्रान्तिं चक्रुः।

१९१४ तः १९१८ खीष्टाब्दपर्यन्तं जायमाने विश्वयुद्धे भारतवासिभिरिङ्गलैण्डस्य महती सहायता कृता। तथाप्याङ्गलशासनमत्याचारान्निवृत्तो न बभूव। एतत्परिणामस्वरूपेण वर्धमानो राजद्रोहः पराकाष्ठां गतः। गान्धीमहोदयस्य नेतृत्वे देशोऽयं स्वतन्त्रो जातः।

## भक्त-सुदर्शनम्

भक्त-सुदर्शने षडङ्काः सन्ति। रूपकेऽस्मिन् भवानीभक्तस्य राजकुमारस्य सुदर्शनस्य चरितगाथास्ति।

अयोध्याधिपतिर्ध्रुवसन्धिराखेटवेलायां सिंहस्याक्रमणेन मृत्युं प्राप। तस्य मनोरमा-लीलावतीभ्यां क्रमशः सुदर्शन-शत्रुजिन्नामधेयौ द्वौ पुत्रौ प्रादुर्बभूवतुः। सुदर्शनो ज्येष्ठतया राज्यस्योत्तराधिकारी त्वासीत् किन्तु शत्रुजितो मातामहो दौहित्रस्य राज्याभिषेकाय समुद्यतो जातः। राज्यार्थं विकटकलहं विलोक्य मनोरमा सुदर्शनमादाय प्रयागे भरद्वाजाश्रममाजगाम।

सुदर्शनो भरद्वाजाद् दीक्षां गृहीत्वा दुर्गाराधनं प्रारेभे। जगदम्बायाः प्रसादेन तस्य वाराणसीपुरपतेः शशिकलया नाम राजकन्यया विवाहः समभूत्। ततोऽसावयोध्याराज्यस्याधिपतिर्बभूव।

चतुर्थाङ्कस्य प्रथमदृश्यं सर्वथा प्रवेशकोऽस्ति। रङ्गपीठे युद्धस्य वर्णनमत्यन्तमाकर्षकं वर्तते। संवादानां लघुतया नाट्यौचित्यं स्वाभाविकमेव। दुर्गास्तुतिसम्बन्धिगीतैर्नाटकं मनोरञ्जकं संवृत्तम्। पञ्चमाङ्के कश्चिन्निवेदको ब्रवीति यद्दुर्गा साक्षादागत्य समराङ्गणे सुदर्शनस्य शत्रून् निहन्ति—

यावत्केरलनरेशं हन्तुं सुदर्शनो बाणं सन्दधाति तावदम्बिकया निहतं तं भूमौ पतितं पश्यति। जगदम्बां पात्रत्वेनोपस्थाप्य कविना नाटकस्य गरिमा संवर्धितः।

कवेरन्यान्यपि रूपकाणि नव-नवोद्भावना-परिभूषितानि सन्ति।



## नित्यानन्दस्य नाट्य-साहित्यम्

नित्यानन्दः कलिकाताया शासकीय-सस्कृत महाविद्यालयस्य भारती भवनेऽध्यापयति। तस्य पिता पितामहश्च भारतीय-सस्कृति-परायणौ लोकभाविनौ च बभूवतु.। नित्यानन्देन बहूनि नाटकानि विरचितानि। तद्यथा, मेघदूतम्, तपोवैभवम्, प्रह्लादविनोदनम्, सीता-रामाविर्भावम्।

### मेघदूतम्

मेघदूतमिति पञ्चाङ्के नाटके कालिदासीय मेघदूतमभिनव-संविधानै· सवलितम्। नाटकेऽस्मिन् मेघदूतस्य भाववाक्यछन्दांसि यथेष्टमुद्धृतानि। अत्र यक्षपत्नी वन वन यक्षमन्विष्यन्ती भ्रमति। सा तत्र वृक्षादीन् पतिविषयक प्रश्न पृच्छति। शरदि यक्षो मेघरूप कृष्ण साहाय्यार्थ समागत पश्यति। मेघो यक्षिणी-विषयक-वार्ता यक्षाय श्रावयति। यक्षस्त दौत्याय प्रणोदयति, अलकापुरीमार्गं च निवेदयति। मेघोऽलकापुर्यां पतिसन्देशं यक्षिण्यै श्रावयति तस्याश्च सन्देश यक्षाय गृह्णाति। तद्यथा,

तवैवार्थं प्रियप्राणा म्रियन्ते तव कान्तया।
तव मार्ग प्रपश्यन्त्या दास्या तेऽपेक्ष्यते सदा॥

मेघदूत गीतात्मक नाटक वर्तते। चतुर्थाङ्के देवदासीना गीत सनृत्य विनिविष्टम्। मेघकृष्णस्य चरित छायातत्त्वानुसारि प्रपञ्चितम्। अत्र अङ्कास्तु दृश्येषु विभक्ता.।

### प्रह्लादविनोदनम्

पञ्चाङ्के प्रह्लादविनोदनमिति नाटके प्रह्लादस्य पौराणिक चरित विनिविष्टम्। तदनुसार विष्णोर्द्वारपालकौ जय विजयौ बालखिल्यमुनीना शापाद् हिरण्यकशिपुर्हिरण्याक्षौ बभूवतु'। तयोर्हिरण्यकशिपुर्हरिनाम-सकीर्तनावरोधकः प्रह्लादस्य स्वपुत्रस्यैव शत्रुर्बभूव, यतो हि नाम प्रह्लादो महान् हरिभक्तोऽनिश हरिनाम जपतिस्म। विविधोपायै' प्रह्लाद हन्तु-

मसमर्थो हिरण्यकशिपुः सर्वत्र नारायण इति तस्य मति मिथ्या प्रदर्शयितुं स्फटिकस्तम्भात् भगवतः प्रकटीकरणायादिदेश। स्तम्भादाविर्भूतो नृसिंहो हिरण्यकशिपुं निजघान। हिरण्यकशिपुर्मरणानन्तरं दिव्यदेहधरो बभूव। अत्र किरतनिया-नाट्यानुसार कतिपयस्तोत्राणा विनिवेशो रमणीय एव।

## सीतारामाविर्भावम्

नाटकस्य सीतारामाविर्भाव नाम तु भारतीयसंस्कृतेरुन्नायकस्य प्रणवपारिजात पत्रिकाया प्रवर्तकस्य सीतारामदासस्य पुण्याविर्भावमुपलक्ष्यसंश्लिष्टम्। अंशत' प्रतीकपरमिदं नाटक महाराजकलेर्लोभमोहादिसहायै सह कलियुगीनदुष्प्रवृत्तीना विवरण प्रस्तौति। निर्वहणे नारायणोऽवतारधारणाय उद्युक्तो भवति।

नाटकेऽस्मिन् त्रयो नातिदीर्घा अङ्का' सन्ति प्रायेण लघुतरदृश्येषु विभक्ताः। अङ्काना कथावस्तु परस्परमननुबद्धमेव प्रपञ्चितम्।

## तपोवैभवम्

तपोवैभवमिति नाटके कविना स्वपितुस्तपस्विनो रामगोपालस्य चारुचरित रूपकायितम्। ज्ञानादपि महत्तरमन्नदानमस्तीति रामगोपालस्य पितुर्मतम्। स्वगुरोर्वीरेश्वरतर्कालङ्कारस्येच्छानुसार तर्कालङ्कारस्य विद्यालये रामगोपालोऽध्यापकोऽभवत्।

देवी-साधक सच्चिदानन्द गुरु कृत्वा रामगोपाल साधकोऽभवत्। निर्वहणे रामगोपाल सच्चिदानन्दस्वामिनोऽनुग्रहेण परमेश्वरीं मातरं साक्षात् पश्यति।

कथावस्तुप्रपञ्च दृष्ट्या विरलकोटिकमिदं नाटकम्।



## श्रीरामवेलणकरस्य नाट्यसाहित्यम्

श्रीरामवेलणकर. १६१५ ई० वर्षे महाराष्ट्रेऽजायत। मुम्बय्या विल्सनमहाविद्यालये सोऽधीतवान्। १६३७ ई० वर्षे एम० ए० तथा १६४० ई० वर्षे एल० एल० बी० परीक्षामुत्तीर्यासौ भारतशासनसेवाया पत्रालयविभागे नियुक्त। तत्र पिन-कोड-प्रचलनमनेनैवानुसहितम्। स्व० परमाचार्य डॉ० हरिदामोदरवेलणकरस्येच्छामुरसि कृत्वासौ यत्र कुत्रापि अवस्थित सस्कृताध्ययनलेखनव्रतमविरत पालयामास। बहुविधास्तस्य *रचना* विलसन्ति। यथा,

*काव्यानि*—विष्णुवर्धापनम्, गुरुवर्धापनम्, जयमंगला, जीवनसागर, जवाहरचिन्तनम्, विरहलहरी, जवाहरगीता, गीर्वाणसुधा, अहोरात्रम्।

*रूपकाणि*—सगीतसौभद्रम् (अनूदितम्), कलिदासचरितम्, कालिन्दी।

*सगीतनभोनाट्यम्*—कैलासकम्पम्, स्वातन्त्र्यलक्ष्मी., हुतात्मा दधीचिः, राज्ञी दुर्गावती, स्वातन्त्र्यचिन्ता, स्वातन्त्र्यमणि, मध्यमपाण्डवम्।

*सगीतबालनाटयम्*—जन्मरामायणस्य।

*गीतनाटयम्*—मेघदूतोत्तरम्।

आङ्ग्लमराठीभाषयोरप्यनेन नैकविधा रचना। अस्य कल्पनाशक्तिरुर्वरा विद्यते सगीते च काव्योचितोऽस्याधिकारः। संस्कृतरचनायैतस्य नैसर्गिकी रुचि.। अनेन बहुविधशैक्षणिकसांस्कृतिकसस्थाना संस्थापकत्वेन सदस्यत्वेन वा सम्मानोऽर्जितः।

## कालिदासचरितम्

रूपकमिदं वेलणकर १६६१ ई० वर्षे सस्कृतनाट्यमहोत्सवे प्रयोजयितु प्रणीतवान्। कालिदासं विक्रमादित्यस्य परराष्ट्रकार्यालये उपसचिवत्वेन लेखकोऽत्र कल्पयति। काव्यकौशलेन स पण्डितसभामपि सभाजयामास। कालिदासस्य सम्मानेन राजमहिषी वसुधा उद्विजते

स्म । तस्या पितुर्गृहादायातं कमपि पण्डितराजं कालिदास आशुकविता-स्पर्धाया पराजयते स्म । तत स वसुधया विदर्भान् प्रस्थापित. । विदर्भात् स न परावर्तेत इत्यपि योजना राजमहिषी प्रवर्तयामास । विदर्भेषु कवि कारागारे निक्षिप्त । स कथचित् कारागारात् स्वात्मानममोचयत । अन्ततश्च बहुविधदुरभिसन्धिभिर्विमुक्त कालिदासः सर्वङ्कषं जयति ।

कालिदासचरितमाश्रित्य नैके कवय काव्यनाटकादीनि अरचयन् तथापि कथावस्तुदृष्ट्या नाटकमिदमपूर्वमेव । श्रीरामस्य प्रतिभाया अय सर्वोत्तम प्रसाद इति न सन्देह. ।

रूपकेऽस्मिन् यत्र तत्र हास्यात्मकपद्यानि शिशुसारल्येन निबद्धानि । यथा—

सरस्वती—यस्य बालकस्य पिता स्याद् गोपालः स्वयमजापाल' भवितासौ ॥ ४४ ॥

मदनिका—यस्य बालिकाया सरस्वती माता सर.पङ्कगता भवतीयम् ॥ ४५ ॥

## मेघदूतोत्तरम्

मेघदूतोत्तरं गीतिनाटय १९६८ ई० वर्षे प्रकाश्यता गतम् । अत्र मेघदूतस्यापूर्ण कथावस्तु पूरितम् । अत्र ३८ रागा. अष्ट तालाश्च प्रयुक्ता. । सम्पूर्णमपि रूपक ५१ पद्यगीतेषूपनिबद्धम् । प्रथमदृश्ये यक्ष कुबेरेण शप्तो रामगिरि प्रतिष्ठते । द्वितीयाके यक्षस्य रामगिरिवास' वर्णितः । अन्यत्र यक्षिणी तस्य मिलनाय उत्सुकतया उत्फुल्ला तिष्ठति । कुबेरस्तत्र प्रकटितस्ता प्राह—

वत्से किमेव खिद्यसे
स्वाधिकारे प्रमादं विधाय विन्देत् कुत. प्रमोदम् ।
जीवसि जाया सुते अविधवा कुरुष्व भर्तु श्रमापनोदम् ॥

निर्वहणे यक्षिण्या सगत यक्ष कुबेर आशीर्वचसा वर्धापयति ।

## हुतात्मा दधीचिः

हुतात्मा दधीचिरिति रूपकं दिल्लीनभोवाणीतः १९६३ ई० वर्षे प्रसारितमभूत् ।

दैत्यै' जलावरोधे कृते तृषार्तं ससार वीक्ष्य दधीचि' चिन्तितो भवति । स समुद्र प्रार्थयते ।

भूमेः प्रयाति सहस्रधा पाथोनिधिं सरिता गणै. ।
तस्माज्जल जनजीवन याचे भवन्तं निर्धनः ॥

अनन्तर वृत्रोऽघोषयत्—यदि जना जल वाञ्छन्ति तर्हि वृत्रयज्ञ ते सम्पादयन्तु, अन्यथा मेघो मदीयदासस्य सागरस्य तन्वीभूय स्थास्यति । तत प्रभञ्जन. सगर्वमाह—

स्वातन्त्र्यार्थं सकलजनता प्राणदान हि कुर्यात् । दधीचिश्च स्वनिश्चय समुद्रसमक्षमित्थ प्रकटयाञ्चकार—

मानवाहुतिरेवैषा वाञ्छिता चेत् त्वया सुर ।
प्रीतेन मनसा तोय त्यजेय तव तोषणे ॥

तत' शरीरसघर्षजेनाग्निनासौ वृत्रमदहत् स्वयमपि च दग्धः ।

## राष्ट्रसन्देशम्

राष्ट्रसन्देशमिति रूपकस्यावसाने श्रीरामेण राष्ट्र प्रति सन्देश. ग्रथित । यथा—

यदा यदा रिपुरुदेति भूमे वीरसुत स्व जुहोति होमे ।
स्वातन्त्र्ये मुक्ति सति नियमे स्मरणमिद स्यादनवरतम् ॥

## राज्ञी दुर्गावती

राज्ञी दुर्गावतीति सगीतिकाया प्रसारण दिल्लीनभोवाणीत. १९६४ ई० वर्षेऽभवत् । अस्या रचनाया उद्देश्य कविना वर्णितम्—

नेतारो बहवो वसन्ति भुवने सत्तासनाधिष्ठिता
नित्यं सर्वजनोपदेशचतुरा. स्वर्थार्जने निर्जिता' ।
त्यक्तासुर्विरला तु भूमितनया राज्ञीव दुर्गावती
तस्या जीवनमृत्युकाव्यचरित स्फूर्तिप्रद स्यादिह ॥

## कालिन्दी

कालिन्दीति रूपके कवेर्व्यङ्ग्योऽभिप्राय अयं विद्यते—

'भारतीयाचारविचाराणामैक्यं कथ च मृग्यते तदप्यहिंसाहिंसाविवादेन नाटकेऽस्मिन् दर्शितम् । इति

बगराजो दुर्गेश्वरोऽयोध्याधिपतेस्तनया कालिन्दीं वरयामास। स तु हिसाप्रिय इति अयोध्याधिपतिस्तस्य प्रार्थनां नोरीकरोति स्म। त च दुर्गेश्वर युद्धात् विरमयितुं मगधाधिपति' सुधाशु. स्वात्मान वन्दिन कारयित्वा प्राणार्पणेन राष्ट्ररक्षायै समुद्यतोऽभवत्। तस्य भार्या मन्दाकिनी दुर्गेश्वरमाह—

सेना प्रयातु भवतो निजवगदेशं
युद्ध च यातु विलय जनहानिहेतु।
नो चेद् रणाय मगधा अभियान्तु वङ्गै-
र्यद् भावि तद् भवतु नो नियतीच्छयैव॥

निर्वहणे सुधाशुरहिंसाया मर्म अवगच्छति।

नाटकस्यास्य भौगोलिकत्व लाक्षणिकत्व चाद्वितीयमेव। अत्र चण्डप्रताप (सूर्य) हिमानी (हिमसहति.) कालिन्दी (यमुना) मन्दाकिनी (गंगा) चेत्यादीनि पात्राणि प्राकृतिक मानवीय चोभयविध-रूपे प्रकटयन्ति।

## कैलासकम्पम्

चीनानामाक्रमण विषयीकृत्य श्रीरामेण नभोवाणीरूपकमिदं रचितम्। चीनैराक्रान्तेषु भारतेषु कैलास' प्रकम्पते। शकर: समुपदिशति—

देवाधीशप्रकटितमहा उत्तरस्या दिशाया
देवावास: प्रविततततनुर्य: स्थितो देवतात्मा।
अस्त्र हैमं स्वयमिदमुमातात एष व्रतस्थो
न्यस्यत्युग्र भरतवसुधारक्षणे दक्षिणौऽसौ॥

पद्यात्मकेऽस्मिन् रूपके नूतनच्छन्दासि प्रयुक्तानि।

## स्वातन्त्र्यलक्ष्मीः

स्वातन्त्र्यलक्ष्मीरिति नाटके झाँसीराज्ञी लक्ष्मीदेव्या: शौर्यगाथा गुम्फिता। अत्र त्रयोऽङ्का लसन्ति। राज्या उदात्तकार्याणामनुशासा एवं कृता—

न करिणा निर्माणा रविकिरणा: कीर्णा:
सुरधनुषा वरजनुषा भान्ति विभापूर्णा:।

पराजयेऽप्यनादरो नातिगतो रिपुणा
स्वागतमातिथ्यमहो प्रियभगिनीप्रेम्णा ।।
वारिदानैर्नदी सन्तृषितोषिका अनिललहरी यथा श्रान्तविश्रामिका ।
पीडितालोकने तापहरणार्थिना रीतिरेषा सतां सन्तता स्वीकृता ।।

श्रीरामस्येतररूपकेषु स्वातन्त्र्यचिन्तेति रूपके राणाप्रताप-मानसिंह-योर्मिलनं वर्णितम् । स्वातन्त्र्यमणिरिति रूपके बुन्देलनृपतेश्छत्रसाल-स्योदात्तगाथा निरूपिता । 'तत्त्वमसि' इति संकलनं १९७२ ई० वर्षे प्रकाशितम् अत्र चत्वारि रूपकाणि संगृहीतानि । प्रथमे जन्मरामा-यणस्येति रूपके क्रौञ्चवधकथा, 'आषाढस्यप्रथमदिवसे' इति रूपके मेघदूतकथा, तनयो राजा भवति कथं मे । इति रूपके जातके वर्णिता धनपरेति राज्ञ्या कथा, तत्त्वमसीति रूपके च छान्दोग्योपनिषत्प्रोक्ता श्वेतकेतु कथा निरूपिता ।

## छत्रपतिशिवराजम्

पञ्चाङ्कस्यास्य नाटकस्य प्रणयनं श्रीरामेण १९७४ ई० वर्षे निष्पन्नम् । अत्र सप्तदशशतके शिवराजस्य राज्यस्थापनं प्रजापालनं च मनोरमं वर्णिते । तस्य स्वराज्योपलब्धिर्लोककल्याणयोजनानां कार्यान्वितिश्च सुतरां प्रेरणास्पदं स्तः । अत्र विंशतिदृश्यानि पञ्चविंशति च पात्राणि विलसन्ति । अद्यतनीनमहानाटकेषु अस्य वैशिष्ट्यं सुव्यक्तमेव । यतो हि एकस्मिन् दिवसे सम्पूर्णस्यास्याभिनयः कर्तुमशक्यः । अत एव पाठ्यनाटककोटौ इदं परिगणनीयम् । मंचनात् प्रागेवास्य प्रथमसंस्करणं विक्रीतमिति लोकप्रियत्वमस्य निःसन्दिग्धम् ।

## तिलकायनम्

अस्मिन् रूपके त्रिष्वङ्केषु तिलके निक्षिप्ता अभियोगाः कथं न्यायालये विचारिता इति सरसं प्ररोचितम् । अत्र गीतानां स्त्रीपात्राणां चाभावो विद्यते । अस्य प्रकाशनं १९७७ ई० वर्षे १५ अगस्तदिवसेऽभवत् ।

## लोकमान्यस्मृतिः

द्व्यङ्केऽस्मिन् रूपके संगीतस्य स्त्रीपात्राणां च बाहुल्यम् । लोक-मान्यश्चरमाङ्क एव रङ्गमवतरति एकोक्त्या प्रजायै च धन्यवादान् वितरति । अस्याभिनयः पुण्यपत्तने १९७७ ई० वर्षे संजातः ।



## कालिदास-महोत्साहः

कालिदासमहोत्साहस्य लेखक' ग्वालियरनगरस्य डॉ० हरिरामचन्द्र-द्विवेकर प्रयाग विश्वविद्यालयात् एम० ए०, डी० लिट् उपाधीर्लब्धवान् मध्यभारते च सर्वोच्चशैक्षणिकपदेषु आसीनो विश्रान्त ।

कालिदासमहोत्सवे उज्जयिन्या नाटकमिदमभिनीतम् । प्रस्तावनाया सूत्रधारोऽस्य नूतनता प्रतिपादयति—

यस्मिन्न स्यान्नायको नायिका वा
त्यक्ता धारा नाट्यशास्त्रस्य यस्मिन् ।

अत्र भारतदशा द्रष्टु कालिदासो नारदेन सह भुवमवतरति । कालिदासजन्मस्थाने तदीयस्मारकस्थापनार्थ निर्णयाय महती सभा समायोजिता । कुत्राहं जनिमलभे इति प्रश्नमधिकृत्य कवि स्वय ब्रवीति—

'भारतवासी कविरहमिति पर्याप्त हि मद्विषये ।'

अथ नारद-कालिदासौ विश्वविद्यालय प्राप्य सहशिक्षावातावरणे यून. प्रणयक्रीडामग्नान् पश्यत । कश्चिद् युवती चित्रपटदर्शनाय युवकेन सहावकाश प्राप्तवती । कक्षाया शिक्षकः स्वगतमाह—

'कवेर्नाम न जानामि सूत्र व्याकरणस्य न ।'
नैकश्लोकोपि कण्ठस्थः किन्तु प्राध्यापकोऽस्म्यहम् ।।

अनन्तरं स्वमहोत्सवे कालिदास स्वयमेव द्वारपालस्थानीय. प्राह—

यस्मिन्नवन्तिनगरे नृपते सभायां
यन्नामसस्मरणत. चकिता' सदस्याः ।
तत्रैव तस्य च महोत्सवसुप्रसङ्गे
जातः स एव विधिना नुऽचराद्विहीनः ।।

यूना कोलाहलमाकर्ण्यासौ सखेद कथयति—

मज्जन्मभूमौ मम जन्मनो दिने
मत्स्मारकार्थं च सभा नियोजिता ।
प्रेक्षागृहोद्घाटनहेतवे या
द्वे चापे भग्ने कथमेष उत्सव ॥

कालिदास' तेपा कलकल शमयति, स्वमहोत्सवे स्वयमेव व्याख्यानं ददाति—

या या भाषा सुविज्ञाता अस्माभि पठिताश्च या
तासु तासु च भाषासु ये ये सन्ति च सूरय. ।
तेषा सन्तुलन कृत्वा भिन्नेषु विपयेषु च
प्राप्ता ये सन्ति निष्कर्षा सस्थाप्या पुरत सताम् ॥

अग्रेऽग्रे गन्तुमिच्छूना हितार्थं तन्निरोधिनाम् ।
सङ्गत युववृद्धानामस्तु प्रीतियुत सदा ॥

काचिद् नवीननाट्यसरणि स्वीकृत्य कवि वैशिष्ट्य भजते ।



## अमियनाथचक्रवर्तिनो नाट्यसाहित्यम्

हरिनामामृतप्रस्तावनाया सूत्रधार अमियनाथ परिचाययति—

परिषद स्वकीयेन सदस्येन परात्मना
दुर्गानाथात्मजेनैव सतीनाथानुजेन च।
श्रीमतामियनाथेन रचित चक्रवर्तिना
सुबोधसस्कृतैर्नाट्य प्रतिवर्ष प्रदर्श्यते ॥

एम० ए०, काव्यतीर्थोपाधिविभूषितोऽमियनाथो राजकीयमहाविद्यालये अध्यापयति स्म। हुगलीनगर्य्या तेन सस्कृतपरिषत् स्थापिता। १९७० ई० वर्षे स दिवगत.।

### हरिनामामृतम्

अत्र चैतन्यस्य ससारत्यागपर्यन्तं चरित रूपकायितम्। नित्यानन्द कृष्णमन्विष्यन् नवद्वीपे नन्दनाचार्यगृहमाप। आत्मान स परिचाययति–

पथि पथि परिगच्छन् प्रेमयाच्ञा करोमि
प्रियजनसखिभाव दर्शयन् मा गृहाण।
भजन-निरत बन्धो वगदेशे सुभाग्ये
यदुपतिसुतजन्म प्राप्य धन्योऽसि भक्त ॥

नन्दनस्तमाह—'चरणप्रासादेन धन्य कुरु मम कुटीरम्।'

हरिदास' यवनमन्त्रिणा विष्णुविरोधिना कशाघातैस्ताडित.। गौराङ्गस्य कीर्तनदलश्चतुष्पथे पतित त प्राप। नित्यानन्दोऽपि दण्डकमण्डलू प्रक्षिप्य कीर्तनदले मिलित। कीर्तनयात्राया चाण्डालद्वय गौराङ्ग आलिलिङ्ग। एतत् वकेश्वरभैरवानन्दौ नासहेताम्। तथापि गौराङ्ग परीक्षितुं वकेश्वरस्तस्य वक्षस स्पर्शमात्रेण पुलकितोऽगायत—भज गौराङ्गं स्मर गौराङ्गमिति। राजपण्डित सार्वभौम. चैतन्यलीलया चमत्कृत. तं विष्णोरश व्यजानात्।

नाटकमिदं सुबोधं विद्यते। सवादेषु चटुलता विलसति। कीर्तन-नृत्य-गीतादीना प्राचुर्यादस्याभिनय. रुचिकर' स्यात्।

### धर्मराज्यम्

अस्मिन् रूपके महाभारतीय कथावस्तुराजते। अत्र द्यूतनिर्जितामपहृतालकारा द्रौपदीं गान्धारी समागत्य वक्षसा आलिङ्गति। दु शासनादीन् अपि सा निर्भर्त्सयति। निर्वहणे दुर्योधनस्य अधर्मराज्ये समाप्ते धर्मराज्यस्य स्थापना भवति।

## सिद्धेश्वरचट्टोपाध्यायस्य नाट्यसाहित्यम्

सिद्धेश्वरचट्टोपाध्याय पूर्ववङ्गे १९१८ ई० वर्षे जात । अध्यापन-कर्मणि संलग्नोऽय सम्प्रति वर्धमान-विश्वविद्यालयसस्कृतविभागाध्यक्ष प्राध्यापकपदमलंकरोति । आङ्ग्ल-बगला सस्कृत भाषासु बहवो निबधा अनेन रचिता । नाटकलक्षणरत्नकोशमधिकृत्यास्य प्रबन्ध सुप्रथित' । तस्य सस्कृतेन चत्वारि रूपकाणि विरचितानि प्रसिद्धि गतानि ।

### धरित्रीपतिनिर्वाचनम्

१९६९ ई० वर्षे रचितमिद रूपकं कलिकाताया सस्कृतसाहित्य परिषदा १९७१ ई० वर्षे प्रकाशितम् । तदनुसार काल्पनिक कथावस्तु प्रवर्तते—

भवपान्थशालायामीश्वर कर्णयो कर्पास निधाय वधिरयति । विश्वकर्मा तस्य कर्णप्रदाहनिवारणाय गुडसुधालेप करोति । ईश्वरस्य कन्या धरित्री विवाहयोग्या विद्यते । तस्या पत्युर्निर्वाचनाय स्वय-वरार्थिना सभा सज्जिता । तत्र ते परस्पर कलहायन्ते । व्यग्यगर्भाया अस्या नाटिकाया निहितार्थ अनायास परिचेय । अत्र नान्दी-प्रस्तावना-भरतवाक्याना प्रयोगो विहित । तथापि लेखकानुसारमत्र आधुनिकी नाट्यरीतिराश्रिता ।

### अथकिम्

आधुनिकी नाट्यरीतिमनुसृत्य रचिता द्वितीयेय नाटिका चट्टोपाध्या-यस्य विद्यते । आशाकमलयो कलकलेन प्रथमदृश्य प्रवर्तते । तदनु खडग-गण्डक-घनक डकाराणा मध्ये निर्वाचनमधिकृत्य विवादो भवति । अत्राधिकपात्राणा सम्मर्द रगपीठे नोचित ।

### नना-विताडनम्

अस्मिन् प्रहसने सूत्रधारो रग' प्रविश्य आह—अभिनयो न भविष्य-तीति । सामाजिकास्तमभिनयाय प्रेरयन्ति । सूत्रधारस्तान् आहूय मञ्चे विवाद प्रवर्तयति । सूत्रधार कथयति—नना मे अधुनापि न मृता,

पर मरिष्यत्येव । एतदर्थं स्वस्ववैद्यानानेतु पण्डित-शिक्षक-तरुणा गच्छन्ति । तदनु नना उत्तरा पूरवी विदेशिनी च प्रविशन्ति । सूत्रधारो निर्गच्छति । ननाया दायमधिकृत्य द्वयो पक्षयोर्विवादो जायते । ततश्च स्वकुम्भ-भकुम्भ वसुकुम्भनामानो वैद्यास्ता परीक्षितु समायान्ति । अनन्तर ता मृतामाकलय्य सर्वे अन्त्येष्टिविषये परामृशन्ति । तदानीमेव नना उत्तिष्ठति । ता प्रेताविष्टा मत्वा वैद्या पलायन्ते ।

## स्वर्गीय-हसनम्

रवीन्द्रनाथस्य स्वर्गीय-प्रहसनमनुकृत्य चट्टोपाध्यायेन यथानामेद प्रहसन रचितम् । सूत्रधारो ब्रूते-

स्वर्गे लोके वसतिमधुना राजनीतिरवाप्ता ।
मत्ता देवा' सतत-कलहे कुत्र नाट्यावकाश ॥

अत्र स्वर्गे राजनीति कथ खेलतीति प्रदर्शितम् । बृहस्पतिर्देवराजो भवितुमिच्छाति । अशोकाकबरौ मन्त्रिपद वाञ्छत । विविधहास्यमय-सवादै सविधानैश्च देवलोकस्थानि पात्राणि आनन्दयन्ति रसिकान् । निर्वहणे वैतालिको गायति—

जयतु जयतु देवराजो जयतु जनकल्याणकारी ।
ध्वस्तो भेद स्वर्गनरकयोर्लब्धा सहायता धुन्धपुञ्जयो ॥



## वीरेन्द्रकुमारभट्टाचार्यस्य नाट्यसाहित्यम्

वीरेन्द्रकुमारभट्टाचार्यो बङ्गप्रदेशे १९१७ ई० वर्षे जनिमलभत। कलिकाताविश्वविद्यालयात् उच्चशिक्षा प्राप्याय १९४२ ई० वर्षात् प्रारभ्य १९४९ ई० वर्षं यावत् महाविद्यालये दर्शनशास्त्रस्य प्राध्यापकपदम-लंचकार। अनन्तर आसेवानिवृत्ते केन्द्रीयशासानस्य विभिन्नमहत्त्वपूर्ण प्रशासनपदेषु नियुक्ति भजते स्म।

दर्शन काव्ययोरस्य लेखन-व्यापार आङ्ग्ल बगला सस्कृतभाषासु समं प्रवर्तते। शासकीयतन्त्रयन्त्रणायामस्य काव्यप्रतिभा न चूर्णिता। वीरेन्द्रेण बहूनि रूपकाणि नूतन नाट्यविधान समाश्रित्य विरचितानि।

## कालिदासचरितम्

कालिदासचरितमिति नाटक १९६८ ई० वर्षे निष्पन्नम्। अत्र कालि-दासीयप्रतिभाविलास कल्पनाद्वारेण समाकलित। निखिलभारतप्राच्य-विद्यासम्मेलनस्य रजतजयन्त्युत्सवे नाटकमिदमभिनीतम्।

प्रथमाङ्के वररुचि-कालिदासौ परस्पर स्वकीया योग्यता परीक्षेते।

द्वितीयाके उभौ काव्यकौशलेन विक्रमादित्यसदसि स्थान प्रापतु'। कालिदासो विक्रमकन्याया मञ्जुभाषिण्या विषये काव्य रचितवान्। तृतीयाके तस्या' कालिदासायानुरागो वर्णित'। कालिदासस्ता काव्य-कला शिक्षयति। विक्रमादित्यस्ता बन्दिनी विधाय कालिदास निरवा-सयत्। चतुर्थाङ्के रामगिरौ स्थितः कवि वररुच्यनुरोधेन मेघदूत-मरचयत्। पचमाके विक्रम तस्य मञ्जुभाषिण्या विवाहो भवेदिति स्वीकृतवान्।

रूपकेऽस्मिन् नूतनच्छन्दसा प्रयोग' कृत.। कालिदासीयकाव्येभ्य' २५ पद्यान्यप्युद्धृतानि।

## गीतगौराङ्गम्

गीतगौराङ्ग नाम गेयरूपक वीरेन्द्रेण १९७४ ई० वर्षे विरचितम्। अस्मिन् रूपके ८१ गीतानि षड्रागेपु ७५ रागिणीषु च समाविष्टानि।

चैतन्यस्य चरित्र पूर्वग्रन्थेभ्य परिशोध्य समुपस्थापितम्। अत्र पञ्च अङ्का सन्ति। अङ्का दृश्येषु विभक्ता। सम्पूर्णेऽपि नाटके त्रिशत् दृश्यानि सन्ति। सवादा पद्यात्मका एव व्यवहृता। एकोक्तीना चात्र बाहुल्य वर्तते। प्रायश सर्वाण्यपि गीतानि एकोक्तिरूपेण निबद्धानि। वीरेन्द्रस्य भाषा नितरा सरला कोमलस्वरलहरीविशिष्टा चास्ति। सर्वत्र प्रसादगुणो वैदर्भीरीतिश्च शोभेते। कथावस्तुनो रूपणे कविकर्णपूर-कृतचैतन्यचन्द्रोदयस्य प्रभाव प्रत्यक्षमेव वर्तते। कविहृदय भावाना विश्वात्मकानुबन्धान् प्रत्याययति। यथा गौराङ्गप्रव्रज्यावसरे वर्ण्यते—

कानने लतासु पुष्पाणि न मोदन्ते
मन्थरपवनो गायति करुणसगीतम्।
शष्पाणि गतासुकल्पानि म्लायन्ते
पार्थिवरुदित नु वियति कि प्रतिध्वनितम्॥

कविना मानवचरित्रनिर्माणयोजना सम्यक् प्रकाशिता। यथा—

तृणादपि सुनीचेन तरोरपि सहिष्णुना।
अमानिना मानदेन कीर्तनीय सदाहरि॥

## सिद्धार्थचरितम्

वीरेन्द्रेण १९६७ ई० वर्षादारभ्य १९६९ ई० वर्षपर्यन्त षट् पुस्तकानि रचितानि। तेषु सिद्धार्थचरित पञ्चमम्। वीरेन्द्रेण महात्मा गौतमबुद्धो महत्तमो दार्शनिक इति विज्ञप्तम्।

स सदाशयस्य सहानुभूतेश्च सर्वश्रेष्ठ' प्रभव। सोद्देश्यमिद रूपक तुरीयजीवनदर्शन निरूपयति। समसामयिकस्थितिषु अस्य नाटकस्य वस्तु प्रेरणास्पदमास्ते। बुद्धदेवस्य सुधावर्षिणी वाणी सन्दिशति—

पिता भिक्षुस्तथा पुत्रो भिक्षुणी तस्य जन्मदा।
भिक्षोर्हि गौतमस्याद्य भिक्षव. सर्वबान्धवा॥

अस्य गीतानि विचित्रलयतानोचितानि नृत्योपयोगीनि च सन्ति। एकोक्तीनामत्र बाहुल्य विलसति।

## शूर्पणखाभिसारः

गीतगौराङ्ग इव शूर्पणखाभिसारेऽपि आद्यन्त गेयपदानि प्रयुक्तानि। सूत्रधारेण नवीनरूपकाणा नूतनमाकर्षण प्ररोचितम्। तथाहि—

'नवीनमाहो रसिकाय रोचते
न हर्षद स्यात् सतत सनातनम्॥

अस्मिन् रूपके शूर्पणखा रामसमक्ष गायति—

सौरवशदीप दुर्जनप्रतीप श्रीराम रम्यतनु भूपगौरवम्।
नौमि मर्मतोष रिक्तसर्वदोष वन्दे त्वा कल्पतरु प्रेमसौरभम्॥

लक्ष्मणस्तस्या सौन्दर्येण मुग्ध ता परिणीतवान्। प्रेमोन्मादेन अगायच्च—

झटिति किमपि किरति सुहसमतनु-
र्लसति मुखमपि तव सखि सह मया।
नयनविशिखमिह न कुरु विषयुत
तव चरणयुगमयि मम हि शरणम्॥

त च तत्पादानत रामो निवारयति—

धर्मपत्नी तव श्रीमन् सरयूतीरवासिनी।
ऊर्मिलामेकवेणी ता कथ त्व विस्मरिष्यसि॥
रामप्रेरणया लक्ष्मणो शूर्पणखा विरूपितवान्।

अत्र लक्ष्मणचरित्रस्यावनमनमनुचितम्। कवि. परम्परानिगडित-इवाचरति विशेषत शूर्पणखाया कुचकलशाद्युत्थापनायाम्। अन्योक्तीना प्रभविष्णुत्वमत्र समुल्लेखार्हम्।

## शार्दूलशकटम्

'नवीनै' काम्येते नवयुगकथा नूतन दृश्यकाव्यमि'ति सूत्रधारोपस्थापनया रूपकमिद प्रवर्तते। अस्मिन् रूपके प्रवहणसस्थाया कर्मकराणा जीवनयात्रा वर्णिता। रचनाकाले लेखक राष्टिय-परिवहन-सस्थाया सर्वाध्यक्ष आसीत्। पात्रेषु तस्य अन्तर्दृष्टि स्फुटति। अत्र सूत्रधारस्य मन्तव्यमस्ति—

सद्यो जिष्णुर्भवति नितान्त नान्य पन्था कलियुगसख्ये॥

दिवाकर शोषणस्य निवारणाय श्रमिकानाह्वयति । तेषा कार्यरोधेन सचालका व्यग्रा' भवन्ति । धनञ्जयो नाम श्रमिकस्तेषामग्रे घोषयति—

श्रमिका न पितर पितामहास्तथा
भुवनस्य श्रमिका भवन्ति बन्धव' ।
ह्रियते येन धन द्विषामस्मदीय
प्रनिशोध लभता स एव जाल्मक' ॥

सर्वाध्यक्ष राष्ट्रहिताय कार्यरोध त्यक्तु तान् सन्दिशति । तेन च वाहनाना गति पुनरारब्धा । निर्वहणे 'परस्पर विश्वास एव सस्थाया श्रेष्ठवित्तमिति मन्तव्य प्रकटीकृतम् ।

नाटकमिद पूर्णत नवयुगीनम् । अत्र नवीनान्युपकरणानि नूतन-सविधानानि च प्रयुक्तानि ।

## वेष्टन-व्यायोगः

श्रमिकाणामाधुनिकशस्त्र वेष्टन ( घेराव ) विषयीकृत्य रूपकमिद प्रवर्तते । प्रवेशके वेष्टनस्योपयोगिता प्रतिपादिता । पञ्च श्रमिका॰ शिल्पाधिकारिण वन्दीकृत्य स्वाधिकार स्थापयितु यतन्ते । शिल्पाध्यक्षस्तु—

'शिक्षिता अपि कर्महीना॰ सन्ति बहवो युवान इदानीम् । परन्तु नियोगरता वेतनवृद्धये सतत घटयन्ति कर्मव्याघातम् ।'

इति मन्तव्यमुपस्थापयति । श्रमिका शिल्पाध्यक्ष-श्रमाध्यक्षौ वेष्टयन्ति । शिल्याध्यक्ष शिल्पस्वामिन प्रति पत्र प्रहिणोति । निर्वहणे नेता कल्किराविर्भवति । सर्वे तमभिनन्दन्ति ।

## शरणार्थिसंवादः

शरणार्थिसवादे बांगलादेशवासिन' प्रति पाकदेशीयानामत्याचारा निरूपिता' । भारतदेशो बागलानिवासिना शरण भूत्वा तान् रक्षति । अत्र शरणार्थिना त्रास॰, शका, हर्ष॰ आक्रमणकारिणां च क्रूरता द्वेषश्च यथायथं व्यञ्जिता ।

वीरेन्द्रस्याधोलिखितानि रूपकाणि अप्रकाशितानि सन्ति—

(१) मार्जनाचातुर्यम्—अलीबाबाकथामाश्रित्य रचितम्।

(२) चार्वाकताण्डवम्—दार्शनिकरूपकम्।

(३) सुप्रभास्वयवर—सुप्रभाष्टावक्रयो प्रणयगाथामाश्रित्य रचितम्।

(४) मेघदौत्यम्—मेघदूतमाश्रित्य रचितम।

(५) लक्ष्मणव्यायोग—नक्सलवाद्यान्दोलनविषयक।



## व्यासराजशास्त्रिणो नाट्यसाहित्यम्

व्यासराजशास्त्री 'विद्यासागर' इत्युपाधिना विभूषित । उपाधिरय शास्त्रिण सारस्वतमुत्कर्ष प्रमाणयति । कविनानेन रामायणमुपजीव्य प्राय पञ्चविंशति लघूनि रूपकाणि प्रणीतानि । सस्कृत प्रति भारतवासिनामुपेक्षा तस्य मानस दुनोति स्म ।

व्यासराजस्य रूपकेषु विद्युन्माला, लीलाविलासप्रहसनम् , चामुण्डा, शार्दूलसम्पात , निपुणिका च प्रख्यातानि सन्ति ।

### विद्युन्माला

विद्युन्माला एकाङ्करूपकमनेकेषु दृश्येषु विभक्तमस्ति । रामराज्याभिषेकस्य सज्जा प्रवर्तमानामवलोक्य मन्थरा कैकेयीभवन प्रविवेश । तदानीमेव लङ्का भूकम्प समाकुला बभूव । रावण-प्रासादस्य केतु निपपात । धूमकेतुश्च रावणहर्म्यशिखरे न्यपतत् ।

द्वितीये दृश्ये मन्थरा शयानां कैकेयीमुद्बोधयति स्म । भाविनी विपत्तिश्च न्यवेदयत् । तस्या॰ कर्तव्यपालनात् प्रसन्ना कैकेयी तस्यै कण्ठहार प्रायच्छत् । अथ च मन्थराब्रवीत् भवत्या भ्राता भवदीयामापद दूरयितुमेव मा भवत्या सविधवर्तिनीमकरोत् । मन्थराभारती कैकेय्या मनसि भेदभावनामुत्पादयितु न शशाक ।

तृतीये दृश्ये बृहस्पतिरिम वृत्तान्तं रावणाय निवेद्याकथयत्—अस्माक नीतिबीज विनष्टम् । श्रुत्वैतदिन्द्र कैकेयी प्राशसत्—

अभिरूपान्वयजाता सा सूक्तानि गिरतीति कि चित्रम् ।
जातीलता हि सूते सुमनोजालानि सुरभिगन्धीनि ॥

यदि च रामो राज्याभिषेकेऽभिषिक्तो भवति तर्हि राजकर्मणि तथा व्यापृतो भविष्यति यथा रक्षोविनाशचिन्तामेव विस्मरिष्यति सम्प्रत्ययमेवोपायो यद् वय विद्युन्माला नाम पिशाचिका साकेत प्रेषयित्वा कैकेयीहृदय क्षुब्ध कुर्म इति बृहस्पतिनोक्तम् ।

चतुर्थेऽङ्के कैकेयी रामराज्याभिषेकवैभव वीक्ष्य क्षुब्धा सती तद्विघातोपाय मन्थरामपृच्छत् । मन्थरामतमनुसृत्य सा कोपभवनमविशत् ।

अथ च दशरथेन प्रसाद्यमाना सा वरद्वयचर्चां चकार। नृपति वर दातुकाम सा भरतस्याभिषेक चीरजटाधारिण सतो रामस्य चतुर्दश-हायनमित वनवास च ययाचे। दशरथोऽब्रवीत्—

नून वरद्वयोद्भिन्नौ राहुकेतू रविद्विषौ।
यौ सूर्यवश ग्रसितु युगपद् भुवमागतौ ॥

इति कथयित्वा राजा मूमूर्छ। तदानीमेवागतेन सुमन्त्रेण कैकेयी राममानयति स्म। रामस्य पुरत वरद्वयस्य च चर्चां कृतवती। रामस्तदनुसार वन प्रतस्थे। दशरथेनोक्तम्—

अयि दुर्वृत्ते! अद्य विच्छिन्न त्वया सह दशरथस्य संसारबन्ध। इद पश्चिम ते दर्शनम्।

षष्ठे दृश्ये वनगमनमुद्दिश्य सीतारामयो तर्क-वितर्कौ विद्येते। राम एकल एव वन जिगमिषुरासीत्। तदानीन्तन सीतायास्तर्कोऽवलोक्यताम्—

त्वदर्धमङ्ग यदि मां विहाय प्रयाति वन्या भुवमार्यपुत्र।
गुरोर्न वाक्य परिपालित स्यादर्ध कृत चेदकृतेन तुल्यम् ॥

अन्तत सीताया सत्याग्रह फलित।

सप्तमे दृश्ये राम खड्गहस्त पितृवधोद्यत लक्ष्मणं दैवकृतमिद-मित्युक्त्वा शमयामास। शान्तो लक्ष्मणो वनगमनायोद्यतोऽभूत्।

अष्टमे दृश्ये वनगमनोद्यतायै सीतायै कैकेयी वल्कलानि प्रायच्छत्। रामस्तानि सीताया प्रार्थनया अंशुकानामुपर्येव बबन्ध अथ वसिष्ठ समागत। तस्यै सीताया वनवासो नारोचत। सीता तमुवाच—आर्य-पुत्र एव मम साम्राज्यम्।

## शिल्पम्

रूपकेऽस्मिन् दृश्यानामारम्भे एकोक्तिरास्ते। प्रथमदृश्यस्य प्रारम्भो वज्रदंष्ट्रस्यैकोक्त्या भवति। तृतीय दृश्यम् इन्द्रस्यैकोक्त्या प्रारभ्यते। दृश्यस्य मध्येऽपि एकोक्तिर्विद्यते। तृतीयदृश्यस्य मध्ये बृहस्पतेरेकोक्ति-र्विलसति। चतुर्थदृश्यस्य मध्ये सुमन्त्रस्यैकोक्तिरस्ति। गीताना समा-वेशोऽस्मिन् बाहुल्येन विद्यते। सवादा लघु-वाक्येषु राजन्ते।

**लोकोक्तिः**

( १ ) कुक्कुट्या वशमापन्नोऽयम् ।

( २ ) अलोहमयी शृखला खलु कलत्र नाम ।

रूपकस्यास्य प्रकाशन मद्रासस्य विद्यासागर वाचनालयस्य १७४ सख्याया 'मइनरोडा राजा अण्णामलैपुरत १६५४ खिष्टाब्दे सवृत्तम् ।

## लीलाविलासप्रहसनम्

सप्ताङ्के लीलाविलासे गौतमस्य पण्डितस्य कन्याया लीलाया परिणयो विलासेन सह कठिनतया सम्पद्यते। गौतमो लीलाया विवाह वेदान्तभट्टेन सरलपण्डितेन सार्ध चिकीर्षुरासीत्। किन्तु पत्नी चन्द्रिका ता सेमिलाभिधानाय मद्यसेविने दातुकामासीत्। लीला वेदान्तभट्ट सेमिल च मनसा नाभिनन्दति स्म। तस्या भ्राता सत्यव्रत तस्या रुचि ज्ञात्वा तद्विवाह स्वसहाध्यायिना विलासकुमारेण सम निरणयत्।

विवाहात् प्रागेव दस्यवो देव्यै बलि प्रदातु लीला भैरवी-मन्दिर नयन्तिस्म। तत्र स्वप्राणान् पणीकृत्य विलासकुमार ता ररक्ष। पुरस्काररूपेण स लीला लभतेस्म।

लीलाविलासप्रहसनस्य प्रकाशन १६३५ खिष्टाब्दे पालघाटत सञ्जातम्।

## चामुण्डा

चामुण्डायां चत्वारोऽङ्का विलसन्ति। प्रथमेऽङ्के दृश्यद्वय द्वितीये, तृतीये, चतुर्थे चाङ्के एकैक दृश्य राजते। अस्य रूपकस्य कथानुसार ग्रामवासिन आधुनिकसभ्यताया उपलब्धि विगर्हन्ति, किन्तु तदुपभोग स्वीकुर्वते। ग्रामीणानां मध्ये विधवैका लन्दननगरात् चिकित्सकशिक्षा गृहीत्वा समायाति। ग्रामजनास्ता तिरस्कर्तु योजना विदधति। एकस्मिन् दिने विरोधिना नेतुर्वधू रोगाक्रान्ता भवति। सा विधवा ता वधू निःस्वार्थभावनया समुपचर्य स्वस्था सम्पादयामास। तदा तु सर्वे विरोधिनः तस्यै साधुवादं प्रयच्छन्तस्तत्पक्षपातिनोऽभूवन्।

रूपकस्यास्य प्रकाशन मद्रासस्य चिन्ताद्रिपेटत सम्पन्नम्।

## शार्दूलसम्पातः

प्रस्तुत रूपकमेकाङ्कि विद्यते। अस्मिन् नान्दी, प्रस्तावना, भरतवाक्यञ्च विद्यन्ते। शार्दूलचर्मधारी विश्वामित्रो दशरथं रामं भिक्षते। स खलु यज्ञरक्षार्थं राक्षसान् हन्तुं परमवीरमपेक्षते। दशरथो ब्रूते—

कृशतनुः खलु मे तनयोऽधुना
न स विमुञ्चति मातृजनान्तिकम्।
विहरणैकपरो हि ममार्भकः
कथमयं दनुजानभियास्यति॥

विश्वामित्रो ब्रूते—रक्षःप्रहरणं नाम केवलं विहरणमेव रामस्य। पुत्रवात्सल्याद् गरीयः शिष्यवात्सल्यम्। विश्वामित्रो रोषमप्याहरति यदा दशरथो रामदानं निषेधति।

कृतिरियं वस्तुतो व्यायोगकोटिकं रूपकं भवितुमर्हति, यतो ह्यस्मिन् वैचारिकं वैषम्यं क्रोधपूर्णया शब्दावल्याभिव्यक्तं, युद्धस्य वातावरणमपि च शोभते।

## वेङ्कटरामराघवस्य नाट्यसाहित्यम्

वेङ्कटरामराघवो विंशतिशतकस्य विश्वविख्यातेषु संस्कृतसाहित्य कारेष्वनन्यो विद्यते। मीनाक्षी-वेङ्कटरामाय्यरावस्य पितरावास्ताम्। अस्य जन्म २२-८-१९०८ खिष्टाब्दे तञ्जौरजनपदस्य तिरुवायूरनगरे सवृत्तम्। मद्रासस्य प्रेसीडेन्सीकालेजे महामहोपाध्याय कुप्पुशास्त्रिणोऽनेन सर्वोच्चमध्ययन कृतम्। तत १९३५ ईसवीयाब्दे शृङ्गारप्रकाशमधिकृत्य वाचस्पत्युपाधि (पी एच० डी०) लब्धवान्। एतदतिरिक्त 'कविकोकिल", "सकलकलाकलाप", "विद्वत्कवीन्द्र", "षड्भषणश्च" राघवस्य सामाजिकोपाधयो विलसन्ति। अस्यायुषोऽधिकाशो मद्रासविश्वविद्यालयेऽध्यापने व्यतीत।

डा० राघवन् महोदय आशातीता प्रतिष्ठा प्राप्तवान्। विश्वस्य सर्वोच्चसारक्ष्यतकसस्था तस्मै श्रेष्ठ पद प्रदाय गौरवमभजन्। अस्य कृतयो यद्यपि सख्यया न बह्व्यस्तथापि तासा काव्यात्मक स्तर उच्चता भजते।

त्रिभुक्ति-रासलीला-कामशुद्धि प्रेक्षणकत्रयी (विज्जिका, विकटनितम्बा, अवन्तिसुन्दरी च) लक्ष्मीस्वयवर—पुनरुन्मेष आषाढस्य प्रथमदिवसे—महाश्वेता प्रतापरुद्रविजय अनार्कली प्रभृतीनि तस्य रूपकाणि वर्तन्ते। श्रीरवीन्द्रनाथठक्कुरस्य वाल्मीकिप्रतिभा-नटी पूजाभिधानयो कृत्योरनुवादोऽप्यनेन व्यधायि।

देववन्दी वरदराज', महीपो मनुनीति चोल, सर्वधारी, फाल्गुन., कावेरी, षोडशीस्तुति', कि प्रिय कालिदासस्य, श्लिष्टप्रकीर्णम्, काल कवि, सक्रान्तिमह:, नरेन्द्रो विवेकानन्द., कवि, ज्ञानी ऋषि', किमिद तव कार्मणम्, विश्वभिक्षुस्तव, शब्द (नृत्यगीतम्), कामकोटिकार्मणगृहीतमिवान्तरङ्गम्, ब्रह्मपत्रवैवर्तपुराणम्, दम्भविभूति, गोपहम्पन्न स्वराज्यकेतु, महात्मा, इत्येतस्य लघूनि काव्यानि राजन्ते।

डा० राघवस्य कृति "मुत्तुस्वामिदीक्षितचरितम्" उच्चकोटिकं महाकाव्यमस्ति यद् दृष्ट्वा काञ्चीपीठस्य शङ्कराचार्यस्त कविकोकिल इत्युपाधिना भूषयाञ्चकार। एतदतिरिक्तमस्यानेकाष्टीका निबन्धाश्च सन्ति।

## कामशुद्धिः

कामशुद्धिरिति कृतिरेकाङ्क रूपकमस्ति। अस्या रचनाया भारतीयपरम्पराया योरोपीयनाट्यशास्त्रीयपद्धत्या सह सम्मिश्रणस्य प्रयासो विहित ।

अस्य प्रथमोऽभिनय कालिदासमहोत्सवे सम्पन्न ।

### कथावस्तु

मान कुर्वाणा रतिर्जवनिकासविधे तिष्ठति। कामस्ता मिलितुमायाति। रतिस्तमुपालभते—भवत कार्यजात दोषसकुलमस्ति येन भवान् मन्मथ-दर्पक-मदनादीनि दुरभिधानान्यवाप्तवान्। कामोऽब्रवीत्—मम प्रसादादेष ससार आनन्दमवाप्नोति। रतिरवोचत्—न खलु स आनन्द, अपि तु आनन्दाभास। भवाँस्तु लोकाना कृते उन्मादरूप ।

एतस्मिन्नेव समये तत्र मधुस्समायात'। कामस्तमब्रवीत्—मया तु देवराजादेशात् विश्वामित्रो रम्भादासोऽस्ति करणीय। रतिरिय मम दयिता नास्मिन् कर्मणि मत्साहाय्यमाचरिष्यति। त्वमेव तावदिमा मनुनय। रतिर्मधुमपि भर्त्सयति। तर्हि कि करिष्यति भवतीत्येव पृष्टा सोवाच अत परमह तपस्तप्स्यामीति।

प्रद्युम्नस्य प्रासादे तपोलग्ना रतिमवलोक्य शिवगण इम वृत्तान्त शिवाय निवेदयति। रत्यास्तपःप्रभावात् सकलो लोको मन्दकाम आसीत्। शिवस्तस्याः समीप गत्वा तपस्यन्ती ता विलोक्य कथयति स्म—

इय सा, यस्या. तपो मदीयमपि तपो दूरमध कृत्य मामप्यत्र आचकर्ष इति।

रति' परमज्योति'स्वरूप शिव दृष्ट्वा समाधि समाप्य त तुष्टाव—

धर्मेणार्थेन मोक्षेण सामरस्य दधाति य ।
तादृक्कामस्वरूपाय नमो योगेश्वराय ते ॥

ततो रतिः शिवमुवाच—मम पतिरधर्ममार्गमाश्रयते। तस्य सविधे वसान्युताहो त परित्यजानि ? शिवोऽवदत्—कामस्य सत्पथे समानयनमुचित. पन्था। यतो हि लोहान्तरैर्धातुभिश्च दूषितमिति न हेम

परित्यक्तव्यम्, किन्तु पाकेन शोधयितव्यम्। यस्मिन् पापे जन प्रवृत्त, तत्रैव परा काष्ठा नीत्वा तत्पाप विनाशयितव्यम्। एवमभिधाय शिव स्वकीया योजनामुक्तवान्—अर्हस्तावत् तथा चक्र चालयामि यथा स सद्यो मद्विषमलोचनज्वालादग्ध पूतश्च त्वद्योग्य. सम्पद्येत। अथ च तदानीमेव स मदनुकूलसेवको भविष्यति। तदैव युवयोः सन्तती शम. तुष्टिश्च भविष्यत।

रति शिवस्येदृश्या योजनया प्रसन्ना शिव प्रशशास।

## प्रतापरुद्रविजयः

प्रतापरुद्रविजयस्यापर नाम विद्यानाथविडम्बन वर्तते। विद्यानाथ. चतुर्दशशतके "प्रतापरुद्रयशोभूषण" लिलेख। पुस्तकमिद डा० राघवरय स्नातकोत्तरपाठ्यक्रमे निर्धारितमासीत्। विद्यानाथस्याहृद्याभि प्रौढोक्तिभिरुद्विग्नो राघवमहोदय प्रस्तुत नाटक प्रणिनाय।

### कथावस्तु

प्रतापरुद्रो दिग्विजयाय प्रतिष्ठते। सेनासञ्चाररजसा सूर्य आवृत.। सूर्यस्यावृतत्वाद् मध्याह्नस्य किञ्चिदनन्तरमेव सन्ध्या समापन्ना। ब्राह्मणा सन्ध्यामुपासितु, स्त्रिय सायन्तनमण्डनार्थ, पक्षिणो नीडान्, उलूकाश्च विहर्तु युगपदेवाचलन्। मन्दिरस्य बुभुक्षुरुपासक' शीघ्रमेव प्रसादोपलब्धये सायन्तनीं पूजा समापयितु शिवायतन प्रातिष्ठत।

प्रथमेऽङ्के नन्दनवनगतौ पौलोमीमहेन्द्रौ सहकारवृक्षस्याधस्ताच्छिलातलसंस्थितौ असामयिक प्रदोषमालोकयत'। अथ शीघ्रमेव पौलोम्या अक्षिणी रजसावृते सवृत्ते। इन्द्रस्यापि नेत्रसहस्र रेणुरुद्ध बभूव। सोऽश्विद्वयमाजुहाव। रुद्धदृष्टि शची इतस्ततो धावन्ती क्रीडासरसि पपात। सरसो जलसयोगात् तदक्षिगतेन रजसा कर्दमायितम्। तदा सा पीडातिशयात् तत्रैव विसञ्ज्ञा सजाता।

द्वितीयेऽङ्के शत्रु राज्ञो राजधान्याः समीपवर्तिनि विपने राजकुलशरणार्थी सन् तिष्ठति स्म। सम्मर्देऽस्मिन् गावो मृगा वानप्रस्थाश्चाभावग्रस्ता अभूवन्। यतो हि—

एते नृपा अपपदा इव' केचन फलादिभिराहारमकुर्वन्। अन्ये केचन

फलादीन्यलभमाना सर्वमपि तृण भुक्तवन्त । अपरे केचित् तत्तोपरि किञ्चिदपि नासादयन्त कन्दादिमृगयया भूमिमखनन्। पश्य, पश्य, अधस्ताद् वराहकुलघोणोत्खाता इव गर्तास्तत्र तत्र विलोक्यन्ते ।

इन्द्रस्याक्षीणि येन केन प्रकारेणाश्विभ्यामुपचरितानि । उपचारान्तराल एव कर्दमनिमग्नामेकाकिनी शचीमसुरा हृतवन्त इति समाचारमिन्द्र आसादितवान् । अथान्धकार. सर्वा दिश. आवृणोत् । क गतो दिवाकर इति पृष्टश्चर उक्तवान् यत्सोऽसुरभयान् मेरुगुहामध्यास्ते । निशाचराणामाक्रमणमाकलय्य सुरगुरु. सन्धिवार्ता सुहिता मेने । एतस्मिन्नेव समये दैत्यपतिरागत्य जगर्ज—

आ' क्वाय स देवेन्द्रहतक । कुत्रास्ते स द्विजपाश. सुरगुरु । आः तिष्ठत जर्जरनिर्जरकीटा ।

तृतीयाङ्कात् पूर्व विष्कम्भके मातलि नारदावागच्छत । नारदो मातलिमब्रवीत्—इन्द्रस्य विपत्ति दृष्ट्वाह शिवेनोक्त —"मातलि भूलोक प्रेषय । स च देवरक्षार्थं प्रतापरुद्रमानयतु । सर्व श भविष्यति ।"

नारदप्रदत्तपरिचयानुसार मातलिर्भूलोकात् प्रतापरुद्रमानयामास । त दृष्ट्वैव दैतेया दुद्रुवु ।

चतुर्थाङ्कात् पूर्वे विष्कम्भके मातलिर्बृहस्पति ब्रूते—सर्वं तु सुसम्पन्न, कि तु इन्द्रस्यानेकान्यक्षीणि प्रतापरुद्रस्य प्रतापज्वालावलोकनेनान्धीभूतानि ।

बृहस्पतिरुवाच—अमृतशाली चन्द्रमा असफलः संवृतोऽश्विद्वयमपि । दिष्ट्या तदानीमेव चन्द्रिका दृष्टा, यथा सहस्रनयनस्य चिकित्सा सम्पन्ना ।

चतुर्थेऽङ्के ब्रह्मा, विष्णु , महेश , देवर्षि', वीररुद्र', इन्द्रादयश्च रङ्गपीठेऽवलोक्यन्ते । वीररुद्रेण साक सिहासनमलक्रियतामिति परमेश्वरो महेन्द्रमादिदेश । अथ च परमेश्वर उभौ प्रशस्य सन्ध्याकाले वीररुद्रस्य परमेश्वरप्रतिष्ठाभिषेक विधाय सर्वानब्रवीद्—वय सर्वे एकशिलामासाद्य वीररुद्रस्य साम्राज्याभिषेकमाचरिष्याम' ।

## शिल्पम्

यद्यपि प्रतापरुद्रविजये चत्वारोऽङ्का सन्ति, किंत्विद रूपक विशुद्ध प्रहसन विद्यते । यथा हि लेखकेन स्वयमेवोक्तम्—

This is the humarous story built out of all these absurdities Preface page XVI

नाट्यशास्त्रानुसारमीदृश्या रचनाया प्रवेशक-विष्कम्भकयोरभाव एवेष्ट: । अस्मिन् द्वितीयाङ्कात् पूर्वं यो विष्कम्भक: सम्प्रयुक्त स रूपकस्य पृष्ठचतुष्टय व्याप्नोति ।

तृतीयाङ्कात् पूर्व प्रयुक्तो विष्कम्भक केवल सूचनामेव न वितरति, अपि तु स कार्यपरकोऽप्यस्ति । तृतीयाङ्कस्य प्रारम्भे देवद्वयवार्ताङ्कोचिता नास्ति । अयमश: सर्वथार्थोपक्षेपक. । डा० राघवमहोदयोऽङ्कस्यार्थोपक्षेपकस्य चान्तर न कृतवान् । इय शास्त्रीया त्रुटिरपवादात्मिका विद्यते ।

## विमुक्तिः

विमुक्ति: प्रहसनकोटिक रूपक विद्यते । प्रहसनस्यास्य प्रणयन १९३१ ईसवीयेऽभवत् । मूलकथायां १९६३ ईसवीयेऽभिनयोचित. परिष्कार कृत । अस्य विमुक्तिरिति नाम प्रकृतिपाशात् पुरुषविमोक्षणस्य द्योतक वर्तते । अस्य प्रथमाभिनय. १९६३ ईसवीयेऽभूत् ।

## कथावस्तु

धार्मिकस्य ब्राह्मणस्य आत्मनाथस्य षट् पुत्रा आसन् । स खल्वेका पुत्रमुलूकाक्ष पप्रच्छ—तत्र सरसस्तीरे कि कुर्वाण आसी ? स प्रत्यवदत्—स्नान्तीमभिरूपा तरुणीं पश्यन्नासम् । अवलोक्यता भवद्भिरपि सा सुन्दरी तरुणीं । कस्तस्या: परिचय. ? क च तस्या वसति. ? ब्राह्मणस्तमात्मज धिक्चकार । चलप्रोथ-शुण्डाल-कण्डूलादयोऽपि तस्य पुत्रा एवमेवानर्थकरीषु प्रवृत्तिषु प्रात समय गमयन्ति स्म ।

व्यर्थमेव भवन्तश्चिन्तानिमग्ना इति कण्डूल: पितरमब्रवीत् । तदानीमेव किमप्यश्नन् स्कन्धेन च शाकभाजन धारयन् चलप्रोथो दृष्टिपथमायात । पिता त विलम्बेनागतोऽस्यथ च सर्वाणि वस्तून्युच्छिष्टानि कृतवानसि इति भर्त्सयामास ।

अपरतो ब्राह्मणपत्नी शिरसा घट धारयन्ती समयान्ती दृष्टा । तां दृष्ट्वैव ब्राह्मणस्यात्मा चकम्प । भार्या पतिमसाम्प्रतमुक्तवती । ब्राह्मणोऽपि तदनुरूपमेवोवाच । अन्तत. पत्नी विजयते स्म । सर्वे पुत्रा मातुरनुनायात्रिणो बभूवु ।

अथ ब्राह्मणो ज्येष्ठतनयस्य लटकेश्वरस्य गतिविधिविषये प्रश्नमकरोत् । ज्ञात यत्तस्य विषये किमपि न ज्ञायते । ब्राह्मणो भोक्तुकाम आसीदत पत्नी तुष्टाव—

नमस्तेऽस्तु महामाये नमस्तेऽस्तु महेश्वरे ।
नमस्तेऽस्तु पराशक्ते नमस्ते विश्वनायिके ॥

अन्ततो यदा ब्राह्मणेनोक्त यत्त्वया सह गृहस्थाश्रमो न सम्यगास्ते । अतस्त्वामह परित्यक्तुमिच्छामि, तदा पत्नी ब्रवीति स्म—यदि सम्भवेत्तर्हि अहमपि भवन्त परित्यजेयम् । ब्राह्मण उवाच—त्वया, तव पुत्रैश्च सार्धं निवासात् वनप्रयाणमथ वा मरण श्रेयस्तरम् ।

ततश्चलप्रोथ आगत्य मदुदरे मूषका. कूर्दन्तीति वदन् खादितुमयाचत । ब्राह्मणोऽब्रवीत्—शाक क्रेतु गतवता त्वयार्धमूल्यमुदरपोषणे व्ययीकृतम् । कि तवास्ये वृको वसति ?

अस्मिन्नेव काले ब्राह्मणस्य ज्येष्ठपुत्रो लटकेश्वर' तिसृभि' स्त्रीभि सम समागत । तासु द्वे तु ब्राह्मणपत्नी सस्नेहममिलत् । कि तु तृतीया चन्द्रिका नाम रुक्षया दृष्ट्या व्यलोकयत् । ताः सर्वा ब्राह्मणजायाया भगिन्य आसन् । ब्राह्मणस्ता दृष्ट्वोवाच—यूय सर्वे चौरकर्मनिरता. स्थ । लटकेश्वरो यदा पितर प्रणनाम तदा स म्रियता त्वयेत्याशीः प्रयुक्त । अथ चोवाच—कुत इमा आसादिता. । एकस्या एव नार्याः कारणाद् गृह रौरव वर्तते । लटकेश्वरो नारीप्रशसाया प्रकर बबन्ध । अत परमुक्तवान् यद्भवान् कदाचित् सर्वाभिरेताभिर्विवाह कृतवानस्ति । ब्राह्मणो विरुणद्धि स्म ।

द्वितीयेऽङ्के ब्राह्मणो नद्यास्तीरेऽश्वत्थवृक्षस्याधो वेदिकायामासीन' सन्ध्योपासनं करोति स्म । तत्र पत्न्या स्वसा चन्द्रिका वारवार तस्य मानसपटलेऽङ्किता भवति, या गृहागमनसमकालमेव त स्नेहनिर्भरेण कटाक्षेण तृप्त कृतवती । ता प्रति पत्यु' प्रेम ज्ञात्वा ब्राह्मणी तयोर्गतिविधिं प्रति सावधानासीत् । सयोगात् तदानीमेव चन्द्रिका मदनपरवशा ब्राह्मण-

सामीप्यमभजत। प्रेमवार्ता प्रारब्धा। यावत्तावुपगूहनोत्सवाय तत्परौ भवतस्तावदेव ब्राह्मणी तत्राजगाम। ब्राह्मणश्चन्द्रिका मठस्यैकदेशे जुगोप। ब्राह्मणी शशाप—यदि भवानस्मिन् नवीने प्रेम-मार्गे पद दास्यति तर्हि भवत पादभङ्गो भविष्यति। तदैव द्वावपरिचितौ जनौ तत्र समागतौ। तावूचतु—ब्राह्मणोऽसौ मायावतीद्वारा पिशाच्या पत्न्या वश नीत। तत. पश्चात् दृष्ट्री तत्र समागत'। तेन कथित अद्यैव त्वया जीर्णमिद गृह परित्यक्तव्यम्। गृहमिदमासन्नपतन विद्यते। श्व प्रातस्तव पतिर्गृहे न मिलिष्यति। इय सर्वगृहस्वामिन आज्ञा। इत्थ कथयित्वा स जगाम। ब्राह्मणपत्नी पुरवासिन' प्रत्यपृच्छत्—अप्यस्माक गृहाणा कोऽपि स्वाम्यप्यस्ति? पुरवासिभि पृथक् पृथगुत्तर प्रदत्तम्। तदानीमेव कश्चन समायात य ब्राह्मण स्वकुटुम्बस्य दुरवस्थामुक्त्वा सर्वान् परित्यज्य क्वचिद् गमनस्य विचार प्रकटयामास। आगन्तुकेन पृष्ट—क्व भवान् गमिष्यतीति। ब्राह्मणी समर्थयामास—अहमप्येतदेव पृच्छामि। ब्राह्मणोऽब्रवीत्—अद्यैकलोऽह यत्र क्वचिद्विजिगमिषामि। आगन्तुकेनोक्त—निपतिते सत्येकस्मिन् गृहे द्वितीय गृह-निर्मातीति गृहस्वामिनो रीति.। ब्राह्मण उवाच—अह तु सम्प्रति कस्मिँश्चिद् गृहे कयाचनापि भार्यया सहोषितु नेच्छामि।

एतस्मिन्नेवान्तराले ब्राह्मणस्य दु.शीला पुत्रा. स्वमातृस्वसृणा कामात्मकं विवाह-सवाद गृहीत्वा तत्रागच्छन्। तासा तै' सह विवादे जायमाने तत्र दृष्ट्री (कोतवाल) रक्षिणश्चागच्छन् षड् गुणा वन्दीकृता। मातृस्वसारो नद्यां निक्षिप्ता.। ब्राह्मणोऽपि ततोऽपससार।

अथ स ब्राह्मण कुण्डलिन नाम कर्मकाण्डिन दृष्टवान्। कर्मकाण्डी सर्वं ते सुखमय रचयामीति ब्राह्मणमवोचत्। ब्राह्मणेनोक्त—नाह किमपीच्छामि। क्षम्यता भवता। अहमस्मिन् नद्या. प्रवाहे पतित्वात्मघात करिष्यामि। तदैव चन्द्रिकागत्य तमात्मघाताद् रुरोध। तत्रैव जपमाचरन् कश्चन वृद्धोऽब्रवीत् अधुना सर्वेभ्यो दुष्टेभ्यो मुक्तोऽसि। स जापकः तस्मै ब्राह्मणाय मायावतीनाम्नी श्वश्रू हन्तु मन्त्रमुपदिदेश। तदानीमेव ब्राह्मणपत्नी ब्राह्मण गृहीतवती। शपथं च कृतवती—अत'पर सत्पत्नीवद् गृहे निवत्स्यामीति। वृद्ध स्वस्य वास्तविके स्वरूपे समागत्य ब्राह्मणमुवाच—चन्द्रिकया सह तव परिणयं सम्पादयामि। ततस्तैः

सर्वैर्नूतनगृहमवाप्तम् । अन्ते च प्रस्तुतरूपकस्य प्रतीद्घाटनम् भरत-वाक्ये सञ्जातम् । यथा—

ईशास्त्व पुरुषोऽस्मि गेहमिह मे देह स दृष्ट्री यमः
सा भार्या प्रकृतिर्गुणा भगिनिका माया च तासा प्रसूः।
षट् पुत्रा मन इन्द्रियाणि नगर लोको विमुक्त्यै तत
सत्त्वस्था प्रकृतिस्तथा प्रहसन दृष्ट्वा जना जानताम् ॥ १०

शिल्पम्

एकोक्ति प्रयोगो द्वितीयाङ्कस्य प्रारम्भे वर्तते। यद्यप्येकोक्तिः सुरुचि-पूर्णा, किं तु तया तथा दीर्घया न भाव्यम् ।

रूपके द्रविडलोकोक्तीना सस्कृतानुवादो भूयसा प्रयुक्त. । यथा—

१—लिकुचेन गाढ घर्षयामि ते शिर ।

२—सत्रे भोजन मठे निद्रा ।

३—को वा हस्तिन गृहे निबध्य भोजयितु प्रभवति ।

४—पटोलपुष्प ते नयन भवतु ।

५—मा उदरे ताडयत ।

समीक्षा

प्रहसनस्य परिहासोक्तयोऽप्यनावृतसत्यमावहन्ति । यथा—अनर्थाय सर्वविप्लवायैव आधुनिकै सरकृत पठ्यते । डा० राघवमहोदयस्य प्रहसन शृङ्गारोद्दामतरङ्गानस्पृष्ट्वा नाभवत् । वर्तमानशतकस्य वगीय-विदुषा प्रहसनानि शृङ्गार-ग्राम्यालापाभ्या विनापि सहृदयानां मनासि तोष्यन्ति । प्रहसने नाट्यशास्त्रानुसारमेकेनैवाङ्केन भाव्यं, पर त्वस्मिन्न-ङ्कद्वय वर्तते ।

## रासलीला

रासलीला प्रेक्षणककोटिका कृतिरस्ति । प्रेक्षणकस्य तात्पर्य सगीति-केति विद्यते यथा आग्लभाषायाम् "आपेरा" इति । अस्या प्रणयनं मद्रासस्याकाशवाण्यर्थ विहितम् । श्रीमद्भागवतस्य दशमस्कन्धीया कथास्यामुपजीविता । कविना यथास्थान सांगीतिकगद्यांशेषु स्वरचितैः पद्यै. सह भागवतस्य श्लोका ग्रथिताः । अस्यां चत्वारि प्रेक्षणकानि सन्ति ।

कथावस्तु

शरदृतुचन्द्रिकाया नन्दनन्दनो वनविहारमैच्छत् । तदर्थं स कामवर्धनरागमाश्रित्य वेणु वादयामास । श्रुत्वैव गोपिका समापतन् । उत्सुकास्ता' कृष्णेनाभिहिता कि व प्रिय करवाणीति ? प्रथमा गोपिकाब्रवीत्—

भक्ता भजस्व दुरवग्रह मा त्यजास्मान्
देवो यथादिपुरुषो भजते मुमुक्षून् ।

तासा मतमादृत्य कृष्णो यमुनातटे ताभिर्विहारमकरोत् ।

द्वितीये प्रेक्षणके कयाचिद् गोपिकयोक्तम्—भवान् वेणु वादयतु । वयं भवन्त वनमालयालकुर्म. । कृष्णो यमुनाकल्याणीरागमाश्रित्य वेणुमवादयत् । अथ स वनमालया गोपीभि समलकृत' । कृष्णेनोक्त—भवतीना सर्वासामात्ममालामह हृदयेन धारयामि । ततो रासमण्डले स सर्वाभि सह ननर्त ।

तृतीये प्रेक्षणके कृष्णस्तासामहङ्कारस्य निरासायान्तर्दधे । गोप्यः साल-तमालादीन् कृष्णप्रवृत्ति पृष्टवत्य' । काचित् कृष्णमयी भूत्वा कालियदहनलीलामभिनिनाय । कृष्णो मया विहृत्यैकाकिन्या मामिह विहाय क्वचिद् गत इत्यपरा जगाद ।

चतुर्थे प्रेक्षणके यमुनातटे गोपिकास्तमन्वेष्टुमगच्छन् । कृष्णलीला गायन्त्यस्ता तमन्विष्यन्ति स्म । कृष्णमनुपलभ्य सुस्वर रुरुदु । अन्ततो भगवान् कृष्ण' पुन. प्रादुरभूत् । ततस्तु—

अङ्गनामङ्गनामन्तरे माधवो माधव माधव चान्तरेणाङ्गना ।
इत्थमाकल्पिते गोपिकामण्डले सञ्जगौ वेणुना देवकीनन्दन. ।।

रासलीलाया. प्रकाशन १९४५ ईसवीयाब्दे अमृतावाणीपत्रिकायामभूत् ।

## विजयाङ्का

विजयाङ्कापि प्रेक्षणकमस्ति । अस्या अभिनयो मद्रासस्य "क्वीन्स मेरी-कालेज-सस्कृत-एकेडेमी—द्वारा मद्रासस्याकाशवाण्या च सम्पन्न ।

विजयाङ्का नाम कवयित्री बभूव । राजशेखरानुसार सा कालिदाससमकक्षासीत् । विजयाङ्का दक्षिणभारतस्य कर्णाटकराज्यस्य प्रशास्तुः

महाराजचन्द्रादित्यस्य पत्नी, पुल्केशि-द्वितीयस्य च वधूरासीत्। अस्या जन्म सप्तमशतकस्योत्तरार्धेऽभवत्।

कथावस्तु

चन्द्रादित्यप्रासादस्य सरस्वतीमन्दिरे राजकवि' किमपि पठन्नासीत्। सम्राट् चन्द्रादित्यस्त कविसम्राडिति सम्बोध्य प्रणनाम। कविरवोचत्—काञ्चीराज्यस्य पल्लवेश्वरस्य राजकविर्दण्डी काव्यादर्शं विरचय्य समीक्षार्थं स्वकीय ग्रन्थमस्माक समीपे प्रैषयत्। त साम्राज्ञ्या सह द्रष्टुमिच्छामि। तदानीमेव विजयाङ्का समागच्छत्। तस्या पुरत काव्यादर्शस्य मङ्गलश्लोको निपठित.—

चतुर्मुखमुखाम्भोजवनहसवधूर्मम
मानसे रमता नित्य सर्वशुक्ला सरस्वती। इति॥

श्लोक श्रुत्वा विजयाङ्काब्रवीत्—अस्मिस्तु प्रत्यक्ष दोष.। यथा—

नीलोत्पलदलश्यामा विज्जकां मामजानता।
वृथैव दण्डिना प्रोक्ता सर्वशुक्ला सरस्वती॥

अथ च धान्यकण्डनं विदधतीना स्त्रीणामुपरि पूर्वेद्यू रचिता स्वा रचना श्रावयमास—

विलासमसृणोल्लसन्मुसललोलदो कन्दली-
परस्परपरिस्खलद्वलयनि स्वनोद्दन्तुरा.।
लसन्ति कलहुङ्कृतिप्रसभ कम्पितोर स्थल-
त्रुटद्गमकसङ्कुला' कलमकण्डनीगीतय.॥

आचार्यकवेर्दण्डिन' प्रशसामुपश्रुत्य विजयाङ्का सविनयमब्रवीत्—

कवेरभिप्रायमशब्दगोचर स्फुरन्तमार्द्रेषु पदेषु केवलम्।
वहद्भिरङ्गै कृतरोमविक्रियैर्जनस्य तूष्णी भवतोऽयमञ्जलि.॥

## विकटनितम्बा

डा० राघवविरचिताया प्रेक्षणकत्रय्या विकटनितम्बाप्यस्ति। विकटनितम्बा स्वय तूच्चकोटिका कवयित्री आसीत्, पर तु तस्या पतिर्निरक्षर आसीत्। कवयित्र्या गुरु. सुप्रसिद्ध आचार्यो गोविन्द-स्वामी बभूव।

विकटनितम्बायाः कोऽपि ग्रन्थो नोपलभ्यते। सूक्ति सग्रहेषु, अलङ्कारशास्त्रसम्बद्धग्रन्थेषु च तस्याः कतिपयानि पद्यान्युपलभ्यन्ते।

कथावस्तु

विकटनितम्बा किमपि तस्या लेखक लेखयन्ती आसीत्। तदानी· मेव तस्या आचार्यस्तत्रागत । आचार्य. सद्य कृत तस्या' श्लोक श्रोतु· मैच्छत्। तस्या सखी वाचयामास—

क्व प्रस्थितासि करभोरु! घने निशीथे?
प्राणाधिको वसति यत्र मन प्रियो मे।
एकाकिनी वद कथं न बिभेषि बाले!
नन्वस्ति पुङ्खितशरो मदनः सहाय ॥

विकटनितम्बाया· प्राकृतभाषाभाषिण पति तस्या सख्य उपहसन्ति स्म। कवयित्र्या· पति सस्कृतोच्चारण सायासमपि कर्तुं नाशक्नोत्। तदा तस्या· काचन सखी वक्ति स्म—

काले माषं सस्ये मास वदति एकाश यश्च शकाशम्।
उष्ट्रे लुम्पति र वा ष वा तस्मै दत्ता विकटनितम्बा ॥

## अवन्तिसुन्दरी

अवन्तिसुन्दरी नाम प्रेक्षणक महाकविराजशेखरपत्नीविरचितान् श्लोकान् समाश्रित्य कृत वर्तते।

कथावस्तु

एकदा राजशेखरोऽवन्तिसुन्दरीमेकस्य पुस्तकस्याध्ययने निमग्ना ददर्श। कस्येय कृतिरिति पृष्टावन्तिसुन्दरी कविरत्नाकरस्येत्युवाच। कोऽसौ कविरत्नाकर·? इति राजशेखरेण पृष्टोत्तरं ददौ—'बालकवि' कविराजो निर्भयराजस्य तथोपाध्यायः।"

ततो राजशेखर· स्वकीयामभिनवा कृतिमवन्तिसुन्दर्यै प्रदर्शयन्नुवाच—कर्पूरमञ्जरीनामधेय सट्टकमस्माभिस्त्वदर्थमेव प्रणीतम्। अवन्तिसुन्दर्युवाच—तर्हि सट्टकस्यास्याभिनयोऽपि भवेत्। महाकवि· भरताचार्यं सदिदेश—

चाहमानकुलमौलिमालिका राजशेखरकवीन्द्रगेहिनी।
भर्तु· कृतिमवन्तिसुन्दरी सा प्रयोजयितुमेतदिच्छति ॥

अथ राजशेखरमवन्तिसुन्दरी पृष्टवती—इतश्च किं लिखितम्?

महाकविरवोचत्—काव्यमीमांसेयमलङ्कारशास्त्रग्रन्थः। अस्या कृतौ विविधानामलङ्कारशास्त्रिणां मतानां पर्यालोचनं कृतम्। अत्र तव सूक्ष्मदृष्ट्या कतिपयस्थलेषु विवेचनमिच्छामि। कवयित्री जगाद—जना कथयिष्यन्ति यद् राजशेखरेण प्रेमावेशवशात् स्वपत्न्या मतमत्र निक्षिप्तम्। राजशेखरोऽब्रवीत्—तव मतानां सारगर्भितयापवादोऽयं प्रक्षालितो भविष्यति। त्वया तावदुच्यतां यत् काव्ये कविवाणी विषयकः पाकः कतमो नाम? अवन्तिसुन्दरी उत्तरं ददौ—

गुणालङ्काररीत्युक्तिशब्दार्थग्रथनक्रमः।
स्वदते सुधियां येन वाक्यपाकः स मां प्रति॥
सति वक्तरि सत्यर्थे शब्दे सति रसे सति।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु॥

## लक्ष्मीस्वयंवरम्

लक्ष्मीस्वयंवरप्रेक्षणके लक्ष्या सुप्रसिद्धं पौराणिकमाख्यानं चर्चितम्। १९५६ ईसवीये लक्ष्मीव्रतस्यावसरे मद्रासस्याकाशवाणीकेन्द्रादस्य प्रसारणमभूत्।

कथावस्तु

दानवैः पराभूता देवा विष्णुपरामर्शानुसारं दानवैः सन्धिं विधाय समुद्रममथ्नन्। तत्र प्रथमं विषमुदतिष्ठत्, यच्छिवो जग्राह। ततश्चन्द्रोऽमिलत्, यो विषग्रहणनिष्कृतिरूपेण शिवाय समर्पितः। अथ कामधेनुमृषयोऽगृह्णन्। गजेन्द्रमैरावतमिन्द्रोऽग्रहीत्। कौस्तुभमणिर्दितिजैः कमठीभूय मन्दरधारिणे विष्णवे समर्पितः। ततो लक्ष्मीं दृष्ट्वा दैत्येन्द्र उवाच—एतदवधि न किमपि गृहीतमस्माभिः। इयमस्माभिर्ग्रहणीया। तदानीमेव वारुणीं दृष्ट्वा, यामसुराः श्रान्तिविगमनाय गृहीत्वा, लक्ष्मीं विहाय गतवन्तः। ततो देवैर्लक्ष्म्या अभिषेकः कृतः। अथ च तस्यै अवसरः प्रदत्तो यत् सा यं कमपि देवं स्वयं वृणोतु। लक्ष्मीः समेषां गुण-दोषाणां समीक्षणं कृतवती। अन्ततो देवर्षीणां सङ्केतेन सा विष्णुमवृणोत्। यथा—

तस्यांसदेशे आधाय स्वयंवरणमालिकाम्।
कौस्तुभोद्भासि तद्वक्षश्चकार स्वं निवेशनम्॥

अन्ते धन्वन्तरि कलश दधानो नि सरति स्म। दैत्यास्त जह्रु। तदा लक्ष्मीर्मोहिनीरूप गृहीतवती। सा दैत्यान् लोलुपदृशावलोकयतो वीक्ष्याब्रवीत्—भवदर्थमेवागतास्मि दैत्यास्तस्या विश्वासभाजनं भवितुममृतकलश तद्धस्ते ददु। साम्रृत देवेभ्यो व्यतरन्।

शिल्पम्

प्रेक्षणकेषु नान्दी-प्रस्तावनयो' प्रयोगो न विहित.। भरतवाक्यं सर्वेषु प्रेक्षणकेषु विलसति। निवेदकरूपेण पौराणिक-गाथिकयोरुपयोगो राघवमहोदयेन कृत। रासलीलाया गाथिकोऽस्ति। लक्ष्मीस्वयवरे च पौराणिको विद्यते।

## पुनरुन्मेषः

पुनरुन्मेषाभिधाने प्रेक्षणकेऽभिनवविधाया प्रयोगो विद्यते। अस्याभिनय' १९६० खिष्टाब्दे नवदेह्ल्या ग्रीष्मनाटकोत्सवे मालविकाग्निमित्रस्य प्रयोगानन्तरमभवत्।

कथावस्तु

भारतीयसस्कृतेरतीतगौरवस्य चोपासकः कश्चिदनुसन्धाता दक्षिणभारतस्य विद्यारामाभिधान ग्राममगच्छत्। ग्रामस्य गलितश्रीकामवस्थामवलोक्य स सन्देहशीलोऽभवत्। तेन चिन्तित किमसावेव स ग्रामो यस्यान्वेषणेऽहमागत। ग्रामस्य कोऽपि जनस्तेन दृष्ट.। स पृष्टः सन्नुवाच—ग्रामेऽस्मिन् वेदघोष, शास्त्रचर्चा, काव्यव्यापारश्च स्वप्नायिता.। अत्राहमेक एव साक्षर'। मदन्यो यदि साक्षर. कश्चन भविष्यति तर्हि स जीविकार्थं नगर गतो भवेत्। भवानपि विचित्र एव योऽनुसन्धानमधिकृत्य ग्राममागत.। अस्मिन् ग्रामे ममावसाने कोऽपि शास्त्राभ्यासी नावशिष्टो भविष्यति। मम पुत्रो नगरनिवासी सञ्जात.। तस्मै पत्र लिखामि यन्मम गेहे ये तालपत्रलिखिता असख्या ग्रन्थाः सन्ति, तान् विदेशान् प्रति प्राचीनवस्तु क्रीत्वा प्रेषकेभ्यो विक्रीणीहि। ये च जीर्णा ग्रन्था अवशिष्यन्ते तान् नद्या प्रक्षेप्तु यामि, अन्यथा पत्नी मे इन्धनाभावे तान् ज्वालयिष्यति। आगन्तुकस्तान् जीर्णग्रन्थान् द्रष्टुमैच्छत्। अथ तानमूल्यानवलोक्याध्ययनाय गृहीतवान्।

अथ स अनुसन्धाता कचन सगीतज्ञमपश्यत्, यो लेखपाल-कर्म-निरतोऽविद्यत। स आत्मन' कौलिककथा कथयामास—अस्माक पूर्वजास्तु राजभि. प्राप्तसम्माना. सगीताचार्या अभवन्। राजभि सम तद्विद्याया सम्मानोऽपि गत। अहमपि वीणा विहाय हस्ते लेखनी-मगृह्णम्। तत स धूलधूसरिता वीणामदर्शयत्। अह सगीतसम्प्रदाय-स्यान्तिम प्ररोहोऽस्मीति चाकथयत्। कलासाधनाया महतीय क्षतिरिति आगन्तुकेन समर्थितम्। स्वतन्त्रे भारते सगीतविद्याया अभ्युत्थान भवितेति समाश्वासयाम्बभूव। अह भवत सर्वविध साहाय्यमाचरि-ष्यामि। भवान् वशपरम्परागता स्वकीया कौलिकविद्यामजराममराञ्च विदधातु।

तदनन्तरमागन्तुको देवालयमपश्यत्, यस्य कुड्येषु गव्योपल-निर्माणाच्चोलवश्या उत्कीर्णलेखा विनष्टप्राया अभवन्। यदा स यथा-कथञ्चिल्लेख पठन्नासीत्तदैव तेन कश्चिच्चौरोऽवलोकित। चौरो प्राचीना मूर्तीरुत्पाट्य विदेशप्रेषणव्यापार करोति स्म। आगन्तुकस्त घर्षयामास, तस्य च जीविकायै कस्यचित् स्वच्छव्यापारस्य व्यवस्था कृतवान्।

ततोऽग्रे देवालयस्य नातिदूरे काचिज्जरती स्वा सुन्दरी कन्या क्रोशन्ती दृष्टा। तयोर्वार्तालाप श्रुत्वा स ज्ञातवान् यत्साभिरामा कन्या भोजनाभावात् दुःखितासीत्। तस्या जरती जननी तां नगरे नीत्वा विलासिनामङ्कशायिनी विधाय समृद्ध जीवन यापयितुमिच्छति स्म। कन्या च तस्मिन्नेव ग्रामे उषित्वा कौलिकनृत्याभिनयं शिक्षितु वाञ्छति स्म। आगन्तुकोऽब्रवीत्—कन्याया समुचितशिक्षायै योग्याचार्यस्यात्रैव व्यवस्था करोति। अन्ते सर्वे मिलित्वागायन्—

देवि भारतजननि जगति पुराण्यथापि च नूतना।
देवि भारतजननि मङ्गलदायिकेऽम्ब नमोऽस्तु ते॥

## आषाढस्य प्रथमदिवसे

प्रस्तुते प्रेक्षणके यक्ष कालिदासयो रामगिरौ सङ्गते काल्पनिकी कथा पल्लवितास्ति। अस्य प्रसारण मद्रासस्याकाशवाणीकेन्द्रतोऽभवत्।

कथावस्तु

कालिदास एकस्मिन् पर्वते भ्रमन् यक्षमपश्यत्। यक्षेण सह वार्ता-लापे जायमाने महाकविना ज्ञात यदय पर्वतो रामगिरिनामा वर्तते।

कालिदासेन चिन्तित—तर्हि गिरावस्मिन् रामचरणचिह्नानि दृष्ट्वा जीवनं कृतार्थयामि। ततो यक्ष कालिदासश्च परस्पर प्रवासस्य कथा कथयामासतु कथमिवेमा वर्षा गमयिष्यामीति स्वचिन्तामधीरो यक्ष. प्रकटयाञ्चक्रे। तदानीमेव कालिदास. करिकलभोपम मेघ तस्मै गिरिसानौ दर्शयाम्बभूव। यक्षस्तमवलोक्योन्मत्त इव बभाषे—"अयि मेघ, एष कोऽपि दूरबन्धुरर्थी प्रणमति। तत्र मत्कुशलमयी प्रवृत्तिमन्तरा नोपायमन्य प्रेक्षे, न च भवतोऽन्य तत्सन्देशहारकम्" तच्छ्रुत्वा कालिदासोऽब्रवीत्—

कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥

## महाश्वेता

महाश्वेताप्रेक्षणकस्य प्रसारण मद्रासस्याकाशवाणीकेन्द्रादभूत्।

कथावस्तु

महाश्वेता शिव स्तौति स्म। आराधनाकाले तस्या वीणावादनं श्रुत्वा चन्द्रापीडः परा निर्वृतिमुपलभ्य विस्मयसागरे निममज्ज। स महाश्वेताया प्रत्येकाम् प्रवृत्तिमनन्या व्यलोकयत्। अथ महाश्वेता चन्द्रापीडस्य महानुभावतां वीक्ष्य तस्यातिथ्य चकार। ततो राजकुमारस्याग्रहवशवदा स्वकीय कारुणिक वृत्तातं श्रावयामास।

## अनार्कली

अनार्कलीप्रकरण डा० राघवस्य प्रारम्भिकरचनासु विद्यते। अस्य रूपकस्य प्रणयन १९३१ ईसवीयेऽभिनयश्च १९६९ ईसवीये १९७३ ईसवीये च सवृत्तः।

कथावस्तु

फतहपुरसीकर्या अध्यात्ममण्डपे (इबादतखाना) सम्राडकबर. स्वमन्त्रिभि. सह मन्त्रयते। स हिन्दूना कृते स्वसम्मानस्य भावनाया कारणं निर्वक्ति—मम जन्म हिन्दुगृहेऽभवत्। तत्र (हिन्दुगृहे) मम पिता शरणमवाप्तवान्। मम पत्नी "योधाबाई" हिन्दुपरिवारस्यास्ति। अह स्ववधूमपि हिन्दुकुटुम्बादेव चिनोमि स्म।

मुल्ला हिन्दून् प्रति विषमुद्वमन्तोऽविद्यन्त। अकबर सर्वधर्मनेतारो मिलन्ति। तस्य च प्रवृत्ती. सात्विकतापूर्णा विदधति।

द्वितीये तृतीये चाङ्केऽकबरोऽनेकेषां कलाविदां शास्त्रिणाञ्च कृतित्वस्य परिचयं प्राप्नोति। अथ दक्षिणभारतादागता नादिरा (अनार्कली) नाम्नी परिचारिका पुण्डरीकविट्ठलस्य शिष्या सम्राजं समक्षं गानाया-दिश्यते।

चतुर्थेऽङ्के राजकुमारं सलीममनार्कली रहसि मिलति। सलीमो नादिरामेवमवर्णयत्—

नादिरा मदिरा नूनं मादिनी मनसो मम।
सत्यमेतावदप्राप्तपाकं त्वं पुण्यमेव नः॥

नादिराया भाग्ये कुत इदम्?

पञ्चमाङ्के विष्कम्भके सत्तापरिवर्तनस्य षड्यन्त्रं विधीयते।

षष्ठेऽङ्के सलीमोऽनार्कल्यै समुद्विग्नो भवति। तस्याः प्राप्तौ समुप-भोगात् प्राक् स वक्ति—

यदेव प्राप्यते कृच्छ्रात्तदेव परमं सुखम्।
वियोगविघ्नकष्टानि विना पुष्टी रसस्य का॥

अनार्कल्या सगीताचार्यं पुण्डरीकविट्ठलस्तामभिलत्। आचार्येण दृष्टं यत् सा नृत्यप्रदर्शनसमये न तथा प्रसन्ना। आचार्ये गतवति सख्यः तां मण्डयामासुः। तस्या दुःस्थितिं श्रुत्वा ता ऊचुः—

म्लायन्ति पुष्पाण्यपि गन्धवन्ति लोकप्रियः क्षीयत एव चन्द्रः।
परस्परं प्रेमवतां न योगो धातुः पुरा कोऽपि न बुद्धिदोऽभूत्॥

अष्टमाङ्के मूर्ता भावसमृद्धिरिव कृतमण्डनार्कली रङ्गं प्रविवेश। तानसेनोऽपि तस्य नृत्यबन्धं द्रष्टुमुत्सुक आसीत्। आचार्य आदिदेश—अनार्कलि! नृत्याभिनयं प्रारभ्यताम्। नृत्याभिनये सलीमस्यानार्कल्याश्चचक्षूंसि वारंवारमभिलन्। तत्सर्वं रहीमोऽकबरायादर्शयत्। सम्राडाज्ञापयामास—इयं वेश्या सद्यः कारागृहं नीयताम्। श्वश्चेयं कुड्ये चीयताम्।

नवमेऽङ्के सलीमः कारागारादनार्कलीं गृहीत्वा तया सह पलायनस्य योजनां रात्रौ कार्यान्वितां कर्तुं समीहते। तदर्थं स तस्याः समीपं गत्वा तामाश्वासयति—एषोऽहं त्वां रक्षामि। मम मित्राणि सन्ति। शीघ्रं च दूरं पलायितुं साधनानि सन्ति प्रस्तुतानि। अनार्कली बोधयामास—

कथङ्कारम् एतादृशे सशये भवानात्मान निक्षिपति। सा रघुवशमहाकाव्यस्य पक्तिमिवाब्रवीत्—

एकातपत्र जगत. प्रभुत्व नव वय कान्तमिद वपुश्च।
अल्पस्य हेतोर्बहु मास्तु हान जीवन्नरो भद्रशतानि पश्येत्॥

अस्मिन्नेव समये तत्र सम्राडागत.। सर्वे इतस्तत: पलायिता। अनार्कली विष भुक्त्वात्मान व्यापादयितुमैच्छत्, परतु सा सम्राटया तथा कर्तु न शशाक। सलीमस्य हिन्दूपत्न्या. प्रार्थनया सम्राड् अनार्कलीमक्षमतेति पुण्डरीकविट्ठलाचार्य' सलीमाय सदिदेश। तच्छ्रुत्वा राजकुमार उवाच—

पतिव्रताया. सौजन्य तथावीर्यवदेधते।
यथा वज्रकठोरेण नृपेण कुसुमायितम्॥

अथ तानसेनेनागत्य निवेदितम्—महाराजो भवन्त मिलितुमागच्छति। तत सम्राड् राजकुमारमुवाच—

कि ते भूय प्रियमुपकरोमि।

**समीक्षा**

प्रस्तुतस्य प्रकरणस्य प्रथम-द्वितीयाङ्कयो. सामग्री अर्थोपक्षेपके भवेत्। यदि चास्य प्रारम्भ तृतीयाङ्कत' सम्पद्येत तर्हि कलाया दृष्ट्या रूपकमिदमधिक रुचिकर भवेद् नाट्यशास्त्रानुकूल च।

**शिल्पम्**

अनार्कली—प्रस्तावनाया सूत्रधारस्यैकविंशति पक्तीना लम्बतर व्याख्यान नाट्योचित न वर्तते। प्रथमाङ्कात् पूर्व विष्कम्भके सूच्यकथाया अल्पत्व दृश्यकथायाश्च बाहुल्य वर्तते। विष्कम्भके मुन्नीसियाना कलहो, द्वन्द्वयुद्ध, सम्राज. सन्यासि-वेशे रङ्गपीठ आगमनमनौचित्यप्रवर्तित विद्यते।

तृतीयाङ्कस्य वस्तुजातमङ्कोचित नास्ति। एतत् सर्व प्रवेशके विष्कम्भके वा देयम्। छायातत्त्वमस्मिन् प्रकरणे सविशेषमस्ति। अकबर: संन्यासिवेशं धारयति, वीरवरश्च काणो भूत्वा रङ्गपीठ विशति। एकोक्तीनां सौरभमनार्कल्यामाद्यन्त विलसति। दीर्घादीर्घतराश्चैकोक्तय प्रकरणेऽस्मिन् राजन्ते। षष्ठाङ्कस्यारम्भे सलीमस्यैकोक्ति ६५ पृष्ठेषु पूर्णता लभते।

## सुन्दरार्यस्य नाट्यसाहित्यम्

सुब्रह्मण्यार्यतनूज इ० सु० सुन्दरार्य. तिरुचिरपल्ल्यां जन्म लेभे। तत्रैव सोऽधिवक्ता (Advocate) आसीत्। अस्य काव्यप्रावीण्येन प्रसन्नो मद्रासस्य राजकवि. महामहोपाध्याय कृष्णमूर्तिशास्त्री "अभिनवजयदेव" इत्युपाधिनेममलञ्चकार। सस्कृतसाहित्यपरिषदा 'अभिनवकालिदास" इत्युपाधिना च विभूषित.।

सुन्दरार्य तिरुचिरपल्ल्या. सस्कृत-साहित्यपरिषदो मन्त्री बभूव, यदा तस्या अध्यक्षो गोपालाचार्योऽभवत्' स केवल कविरेव नासीत्, अपि तूच्चकोटिकोऽभिनेता निर्देशकश्चाविद्यत। कवे' प्रथमा नाट्यकृति उमापरिणय[1] वर्तते, चरमा च मार्कण्डेविजयमस्ति[2]। एतदतिरिक्त कविना समुद्रस्य स्वावस्थावर्णन नाम काव्य, स्तोत्ररत्नावली, गानमञ्जरी च निरमीयन्त, तामिलभाषायामुपन्यासत्रयञ्च विरचितम्।

### उमापरिणयम्

उमापरिणस्य तिरुचिरपल्ल्या सस्कृतसाहित्यपरिषदो वार्षिकोत्सवे १९५२ ईसवीये द्विवारमभिनय. सवृत्त.।

हिमालय स्वकन्याया पार्वत्याः परिणयाय चिन्तित समागताय नारदाय स्वा चिन्ता प्रकटयामास। नारदोऽब्रवीत्—पार्वती पूर्वजन्मनि सतीतिनाम्ना दक्षप्रजापते' कन्यासीत्, या शिवस्यापमानमसहमाना योगाग्नात्रात्मान ददाह। इयमस्मिन् जन्मन्यपि तस्यैव पत्नी भविता। शिवोऽपि सतीवियोगात्तपसि लग्नोऽस्ति। पार्वती तत्सेवायै तत्रैव प्रेषणीया।

तारकासुरो देवलोकमभ्यषेणयत्। तस्य भटो रम्भा कल्पतरुञ्च हृतवान्। इन्द्रेण पृष्टो बृहस्पतिरुक्तवान्—शिवकुमार एव तारकासुर

---

१ अस्य प्रकाशन १९५२ ईसवीयेऽभवत्। अस्य प्रतिलिपि सागरविश्वविद्यालय-पुस्तकालये विलसति।

२ अस्यापि प्रकाशन सम्पन्नम्। प्रतिलिपि सागरविश्वविद्यालय-पुस्तकालये वर्तते।

हन्तु शक्नोतीति ब्राह्मणा निर्दिष्टम् । एतादृश्या परिस्थितौ पार्वती-शिवयो परिणयाय देवेन्द्रेण काम समाज्ञप्त । रतिस्तज्ज्ञात्वाभि-हितवती—

शक्य. किन्तु घटाम्भसा शमयितु घोरस्य दावानलो
वज्र वारयितु पतन्तमथवा छत्रेण कि शक्यते ।
यो वा कर्तुमपेक्षते च तपसो विघ्न पुरारेपि
क्रोधाग्नौ पतितु स्वय शलभता प्राप्तु स वाञ्छत्यहो ॥

रत्या स्पष्ट मतमासीद् यच्छिवविरोधेन कल्याण न भवति । सापि तेन सम गता ।

ब्रह्मचारिण शङ्करस्य ( शिवेतरोऽय प्राकृत कश्चित् ) जननी मीनाक्षी तस्य विवाह कर्तुमिच्छति । शङ्करो निषेधति—"नून न फलिष्यति ते मनोरथः । दु खकरो भवति ससार. । तप कर्तुं यास्यामि ।" अथ तत्रैव नटेश सुन्दरीनाम्न्या कन्यया सार्धं समागत । सुन्दर्यपि विवाह न्यषेधत । पुनरपि मीनाक्षी-नटेशौ तयो र्मेलापक दर्शनार्थं ज्योतिर्विद. समीपं गतौ ।

इतश्च सुन्दरी ब्रह्मचारिणे नातिदूरे विपरीतदिशायां मुख कृत्वा भूम्यामेव शयिता । तदानीमेव रति-कामदेवौ तत्र समागतौ । मन्मथो निलीनो ब्रह्मचारिण उपरि पुष्पबाण चालयामास । शङ्करो मन्मथ-मदृष्ट्वाचिन्तयत—सुन्दरीय ममोपरि पुष्पाणि प्रक्षिप्य व्याजशयन नाटयति । स तस्या. सविध गत्वा तामुद्बोधयामास । यदा सा न जागर्ति तदा शङ्करस्तानि पुष्पाणि तस्या उपरि प्रक्षिपति । बोधमागता सुन्दरी प्रचण्ड क्रोध दर्शयामास । शङ्करोऽब्रवीत्—तर्हि कस्माद् भवतीमानि पुष्पाणि मयि क्षिप्तवती ? अथ पुष्पगन्धमाघ्राय सुन्दरी शङ्कर प्रति आकृष्टा । शङ्करस्तैरेव पुष्पै. तस्या प्रसाधनं कृतवान् । तौ तथाचरन्तौ वीक्ष्य मीनाक्षीनटेशावूचतु —अधुना ज्योतिर्विद. कतमा-वश्यकता ? मन्मथस्तमात्मन. प्रभाव रतये शनैर्वर्णयामास । एवमेव पार्वत्या सह शिव. परिणेतव्य. इत्यप्यूचिवान ।

अथ रत्या सम मन्मथ शिवस्य तपोभूमिमासाद । तत्र स दृष्टवान्—

न चलति तरुपर्णं मारुतो वाति नात्र
न चलति मृगयूथ श्रूयते नापि शब्द ।
तपति च शितिकण्ठे तत्स्वरूप समस्त
भवति भुवनमेतन्निर्गुण निर्विकारम् ॥

तथाविध शिव दृष्ट्वा मन्मथस्य हस्तपाद शिथिल बभूव । तत्र पार्वती पङ्कजबीजमाला फलानि च गृहीत्वा समागत्य स्तुतिपूर्व प्रणनाम । अद्वितीय पतिमाप्नुहीति शिव आशी प्रायुक्त । मालार्पणकाले मन्मथ सम्मोहनास्त्रस्य प्रयोग कृतवान् । तस्य चास्त्रस्य प्रभावेण शिवस्य मानस सविकार समजनि । तत्सर्वमाकलय्य मन्मथञ्च दृष्ट्वा शिवो हुमिति कृत्वा नेत्रवह्निस्फुलिङ्गेन त ददाह । तत् स्थान च विहायान्यत्र गतवान् । हिमालय पार्वती निनाय । रति भृश विललाप । आकाश-वाणी रति समाश्वासयत्—शिव परिणयसमये त्व पुन पति प्राप्स्यसि । शिवस्त पुनरुज्जीवयिष्यति ।

एकस्मिन् दिवसे नारद पुनर्हिमालयगृह गतवान् । तत्र स पार्वत्याः तपोऽनुमोदयामास । तत स शिवसमीप गत्वा पार्वतीतपसश्चर्चां कृतवान् । तत्तपो भवदर्थमेवास्तीत्यपि निवेदयाम्बभूव । प्रथम शिवोऽब्रवीत्—एतद् देवाना षड्यन्त्र भविष्यति । अनन्तर नारदानुनयेन तस्या पाणिग्रहण स्वीकृतवान् । तत एकदा कश्चिद् ब्रह्मचारी पार्वतीतपोभूमौ ता द्रष्टुमागतवान् । स तस्यास्तप प्रशशस । ततो वार्तालापप्रसङ्गेन ब्रह्मचारी पार्वत्या शिवप्रत्यासक्ति ज्ञात्वा शिवमननुरूप वर समर्थयन् त विनिनिन्द । पार्वती ब्रह्मचारिणे चुकोप । ततः शिवो ब्रह्मचारिण-श्छद्मरूप विहाय स्वकीय वास्तविक रूप दर्शयामास । तयोर्विवाह देवा सम्पादयामासु, शिवश्च काम सप्राण कृतवान् ।

### शिल्पम्

उमापरिणयस्य प्रस्तावना सूत्रधारविरचितास्ति । शिवस्य ब्रह्मचारि-वेश विधाय पार्वत्या सह वार्तालापश्छायातत्त्वात्मक वर्तते ।

## मार्कण्डेयविजयम्

मार्कण्डेयविजयस्याभिनय स्थानीयसंस्कृतसाहित्यपरिषदो वार्षिकोत्सवेऽभवत् । अस्य प्रणयन काञ्चीकामकोटिपीठाधिपतेर्जगद्गुरु-शङ्कराचार्यस्यादेशात् सञ्जातम् ।

## कथावस्तु

मृकण्डुस्तत्पत्नी मृद्वती च शिवार्चनं कुरुतः। पुत्रविहीनत्वात्तयो-रातिथ्यं न कश्चिद् गृह्णाति। तौ शिवमर्चयित्वा मार्कण्डेयनामधेयं पुत्रं प्राप्नुतः, किं तु तस्यायुः शिवेन षोडशवर्षमेव कल्पितम्। मार्कण्डेयो नियमतः शिवार्चनं करोति।

षोडशवर्षावसाने यमश्चण्डवज्रदंष्ट्रनामानौ दूतौ तमानेतुं प्रेषयति। तौ काचिद् दैवी शक्तिर्निषिषेध। ततो यमः स्वयमेव मार्कण्डेय-मानेतुमायातः। यमस्तस्य कण्ठं पाशेन निबध्याचकर्ष। तदा स शिवलिङ्गमालिलिङ्ग। यमः शिवलिङ्गमपि पाशेन बद्ध्वा कृष्टवान्। शिवलिङ्गं पुस्फोट। शिव आविर्भूय यमं चरणेनाजघान। यमो मूमूर्च्छ।

ततः शिवो मार्कण्डेयशिरसि हस्तं धृत्वोवाच—त्वं कालपाशान्मु-क्तोऽसि। चिरञ्जीवी चासि। नारदप्रार्थनया यमोऽपि पुनरुज्जीवितः। मार्कण्डेयः सदा षोडशवर्षीयः स्थास्यतीति शिवो यमं निर्दिदेश।



# विश्वनाथसत्यनारायणस्य नाट्यसाहित्यम्

विश्वनाथसत्यनारायणो विंशतिशतकस्य रचयितृषु श्रेष्ठो वर्तते। भारतशासनेन स पद्मभूषणोपाधिना समलङ्कृत । १९३४ ईसवीये मद्रासविश्वविद्यालयेन तस्य "वेयि पदगलु" इत्यभिधान उपन्यास पुरस्कृत । तेलगुभाषाया विरचिता रामायणकल्पवृक्षाभिधाना तस्य कृतिर्ज्ञानपीठद्वारा लक्ष रूप्यकाणि प्रदाय पुरस्कृता। कवेः 'कविसम्राट्' इत्युपाधिस्तस्य वैचक्षण्य लोकप्रियताञ्च प्रमाणयति। अस्य पिता विश्वनाथ—शोभनाद्रिरासीत्। विश्वनाथ इत्यस्य वशस्योपाधि'। अस्य जन्म कृष्णाजनपदस्य नन्दमुरुग्रामे बभूव। कवे. साहित्यगुरु आचार्य-तिरुपतिवेङ्कटकविरासीत्। कविना स्नातकोत्तरपरीक्षा समुत्तीर्णा। अय प्रथम तेलगु—पण्डित. ततो व्याख्याता, तत करीमनगरस्य महा-विद्यालये प्राचार्यपदमलकृत्य विश्रान्त ।

सत्यनारायणस्य तेलगुभाषाया शताधिककृतयो विलसन्ति। सस्कृतभाषाया द्वे कृती विद्येते—

( १ ) गुप्तपाशुपतम्।  ( २ ) अमृतशर्मिष्ठञ्च।

## गुप्तपाशुपतम्

गुप्तपाशुपते महाभारतमुपजीवितम्। कविराधुनिकयुगीनेषु महायुद्धेषु महामारणशस्त्राणा प्रयोगमसाम्प्रत मनुते। अस्या दिशि सोऽर्जुनमादर्श-वीर निर्दिशति। अर्जुनस्य सविधे महामारक शिवप्रदत्त पाशुपतास्त्र-मासीत्, परन्तु स तस्य प्रयोग नैव कृतवान्। गुप्तपाशुपतस्याभिनय. शरदृतौ समभवत्।

## अमृतशर्मिष्ठम्

अमृतशर्मिष्ठे शर्मिष्ठा—देवयान्योरतयोर्दयितस्य ययातेश्च महा-भारतीया कथा पल्लविता। शर्मिष्ठा ययाते प्रेम्णि रुग्णा सती आसन्न-मरणा भवति। महाराजाज्ञया वैशम्पायननामा मन्त्री तस्या रोगस्य परीक्षायै समायाति। शर्मिष्ठा तस्मै निवेदयति—अह पूर्वजन्मनि बोधा-

यननृपतेर्विदूषकस्य सहपाठिन्यासम्। इन्द्रशापानुसारमह पूर्णिमाया चान्द्रे तेजसि निलीना भविष्यामि। वैशम्पायनानुसार चन्द्रवश्यो ययातिरेव चन्द्र। ययाति स्वर्ग गत्वा तत्र देवविरोधिनोऽसुरान् विजित्य भूलोकमागत्य शर्मिष्ठा मिलति। ता परिरभ्य मूर्छितो भवति। नागवल्ली प्रथम राज्ञा, तत शर्मिष्ठया तत पुनरपि नृपेण दष्टा। एवभूतैर्बहुभि सविधानैरिद नाटक पूर्णमस्ति।

नवाङ्कमिद नाटकं कविना महानाटकमिति सज्ञितम्। सत्यनारायण परम्परावादी नाटककारो विद्यते। अस्य नाटकेषु नान्दी-प्रस्तावना-भरतवाक्यादीना नाट्यशास्त्रीयं सविधानक वर्तते। एकोक्तीनां वैशिष्ट्य विलसति। सवादाना चटुलता पर्याप्त रुचिरा वर्तते।



# विष्णुपदभट्टाचार्यस्य नाट्यसाहित्यम्

विष्णुपदभट्टाचार्यः पश्चिमबंगस्य चौबीसपरगनाजनपदान्तर्गत—भट्टपल्ल्यामधिवसति स्म। १६६४ ईसवीयाब्दस्य फरवरीमासेऽसौ दिवङ्गतः।

विष्णुपदो महामहोपाध्यायस्य न्यायरत्नस्य राखालदासस्य नप्तासीत्। अस्य पिता विद्यारत्नोपाह्वयो हरिचरणोऽविद्यत। विष्णुपदेन बहूनि रूपकाणि विरचितानि येषु काञ्चनकुञ्चिकं, धनञ्जयपुरञ्जयं, कपालकुण्डला, मणिकाञ्चनसमन्वयः अनुकूलगलहस्तकं प्रसिद्धानि सन्ति। कविः संस्कृत साहित्यपरिषत्-पत्रिकायाः सम्पादकेष्वस्ति।

## काञ्चनकुञ्चिकम्

काञ्चनकुञ्चिकस्य रचना १६५६ ईसवीयाब्दे समभवत्। सूत्रधारस्य मारिषेण सह वार्तालापे संस्कृतरूपकप्रेक्षकाणामभावस्योपरि कविना महान् खेदोऽभिव्यक्तः। प्रकरणस्यास्याभिनयो वसन्तोत्सवे सम्पन्नः।

### कथासारः

सुकुमारनामा सुशिक्षितो वृत्तिविहीनो 'बहू-बाजारे' अनुरूपकार्याभावे त्रीन् बालकानध्याप्य यथाकथञ्चिज्जीविकां निर्वहति। तस्य मातापितरौ दिवङ्गतावास्ताम्। तस्य मित्रं प्रशान्तो नाम चिकित्सकस्तं द्रष्टुं तस्य च चिन्तायां समभागी भवितुमायातः। स्वचिन्तानिमग्नः सुकुमारः प्रशान्तं नावलोकयामास। तदा प्रशान्तोऽवदत्—मन्ये यद् भवतोऽक्षिणी दृष्टिशून्ये सञ्जाते। ततः स उपनेत्रं निःसार्य तस्य चक्षुषोरवरोपयाम्बभूव। तदा सुकुमारोऽब्रवीत्—वयस्य! नास्मि प्रज्ञाचक्षुः अपि तु अन्यमनस्कतया भवन्तं नावलोकितवान्। ततः स वृत्तिविहीनतायाः कष्टमाचख्यौ। कस्यचित् प्रभावशालिनो महापुरुषस्य संस्तुतिं विना केवलं योग्यतया न कार्यं सञ्चलतीत्यपि स्वकथने योजितवान्। प्रशान्तोऽकथयत्—तर्हि कोऽपि व्यवसायो विधीयताम्। अहं कुसीदं विनैव तुभ्यमावश्यकं धनं प्रदास्यामि। सुकुमारेणोक्तं—नाहं धनमादास्यामि, यतो हि मित्रेभ्यो धनग्रहणात् सख्यं त्रुट्यति। अन्ते

सुकुमारेण निवेदित—सुरञ्जनवयन-यन्त्रालये रासायनिकस्यावश्यकता विद्यते। यदि भवान् तदधिकारिणा परिचित. तर्हि मम नियुक्ति कारय।

चिरञ्जीवस्य कार्यालये बहूनि पत्राणि समागतान्यासन्। तत्र दशरूप्यकाणा विज्ञप्ति-व्ययलेखोऽप्यासीत्। विज्ञप्तिर्न तेन प्रेषिता, अपि तु तदात्मजया विद्युत्प्रभया स्वविवाहाय प्रेषितासीत्। तदानीमेव जनार्दनठक्कुरश्चिरञ्जीवस्य विवाह प्रास्तावयत् अकथयच्च यदि वयस' षष्टितमे वर्षे वर्तसे तेन किम्? पुत्राभावाद् विवाह कार्य। मया चन्द्रनगरे गतवर्षे एव आयुष' सप्ततिमतीतस्य प्रतापनारायणस्य परिणय. कारित। अस्मिन् वर्षे तस्य पुत्रोपलब्धिरपि सञ्जाता। चिरञ्जीविनोक्त—नाह वार्धके विवाह करिष्यामि। विद्युत्प्रतिभाया विवाहायास्मि चिन्तित'। अथ चाकारिता विद्युत्प्रभा सखीसमेता समागता। इयं तु कमपि कविवर वरीतुमिच्छतीति विद्युत्प्रभाया सखी विशदयामास। ततो देशदुर्दशाया बोधक दृश्य वर्तते। सिद्धेश्वराभिधानस्य व्याधितस्याभिभवकस्य पार्श्वे औषधि क्रेतु रूप्यकाणि नासन्। चिकित्सक' प्रशान्त. तस्मै दयते, पञ्च रूप्यकाणि तस्मा औषधिक्रयणाय प्रयच्छति।

प्रशान्तस्य चिकित्सालये निषण्ण. सुकुमार तस्मै तद्विज्ञापन प्रदत्तवान् यस्मिन् विद्युत्प्रभया विवाहार्थमावेदननामन्त्रितम्। प्रशान्तस्तमावेदन कर्तु तत्काल प्रेरयामास। यदा सुकुमार आत्मानमयोग्य समर्थितवान् तदा प्रशान्तस्तद्धस्तमवलोक्य विचार्योक्तवान्—

"स्वभाग्येन ते धन नास्ति। स्त्रीभाग्येन तु प्रभूतम्।" अनया धनवत्या सह ते विवाह ब्रह्मापि न शक्नोत्यन्यथाकर्तुम्।

सुकुमारेण कथितम्—अह कविर्नास्मि। तत्र पुनः कविताकरणमनिवार्यम्। प्रशान्त उत्तर ददौ—कवितारचन मोदकभक्षणमिव सुकरम्। तत' विद्युत्प्रभायाः सेवकः पूर्णचन्द्र आयातः। दीयता मे केशकृष्णकारिणी काचिदौषधिरित्युक्तवान्। औषध गृहीत्वा स प्रशान्तेन पृष्टो विद्युत्प्रभाया विषये सर्वमुक्तवान्।

अथ सुकुमार. सुरञ्जन-वयन-यन्त्रालये वृत्तिप्राप्त्यर्थमन्तर्व्यूहाय तत्र गतवान्। प्रशान्तोऽपि तेन सह तत्र गत.। स यन्त्रालयस्वामिनो धुरन्धरस्य पुरतः सुकुमारस्य सस्तुति कृतवान्—

सखायमिष्ट. सुकुमारनामा सुस्पष्टभाषी सरलश्च शिष्ट' ।
विज्ञानवारानिधिपारदृश्वा सुधीश्च साधुश्च विशुद्धवृत्त. ॥

अथ सुकुमाराय प्रशान्तो मासस्य द्विशतकरूप्यकाणां वृत्ति दापयामास। ततो धुरन्धरोऽतिरिक्त कार्यं निर्दिष्टवान्—प्रतिदिनं साय स्नातकपरीक्षार्थिनी मम कन्यामध्यापयेति ।

वपुषा त्वमहो मनोहरस्तनया मे नवयौवनान्विता ।
प्रहिणोति शर यदि स्मरो गतिरेका युवयो' करग्रह' ॥

पञ्चमाङ्के प्रथमतो हास्यपरिपाको विलसति। पूर्णचन्द्र औषधेन केशान् कृष्णीकृत्य स्वपत्नी भीषयामास। स चोरवद् गत्वा तस्याः करग्रहण चक्रे। सा गर्जनसिह चुक्रोश—पश्य, अय कश्चिद् मम पातिव्रत्य खण्डयितुमिच्छति। अय कोऽय दस्यु. कन्याया अन्त'पुरं प्रविष्टोऽस्ति। गर्जनसिंहो लकुटसनाथ समागत्य पूर्णचन्द्रं गले जग्राहापृच्छच्च—"कथय रे दास्या पुत्र, कस्त्वम्? कथ वा मामतिक्रम्य गृहं प्रविष्ट.। पूर्णचन्द्र उवाच—अहं पूर्णचन्द्रो, न दस्यु'। त्व मां सर्वदा वृद्धजरद्गव इति व्याहरसि तेनायमारम्भ ।

एकस्मिन् दिवसे सुकुमारमित्रस्य पत्र विद्युत्प्रतिभा प्राप्तवती। तेन किञ्चित् प्रभावितापि नायिका तस्याकवित्वात् तम्प्रति नासीत् प्रवृत्ता। अन्तत कविप्रतिभाया विकसनाय सुकुमाराय मासैकस्य समयः प्रदत्त.।

षष्टेऽङ्के यदुत्तर सुकुमारपत्रस्य विद्युत्प्रतिभा प्रदत्तवती तत् स प्रशान्ताय श्रावयति—

गवामिव धियो येषां त एव गवितात्रिया ।
अत स्वकविताशक्ति' सप्रमाण प्रदर्श्यताम् ।

(अत्र गद्यमयी कविता गवितेति शब्दिता)। श्रुत्वैतत् प्रशान्त आशावान् सञ्जात' सुकुमार-विवाहविषये। सुकुमारेणैका कविता विरचिता—

त्व राजसे पल्लविनीव वल्ली तुच्छोऽहमासे तृणगुच्छतुल्य. ।
यदस्ति नौ दुस्तरमन्तर तन्—न मेलन सम्भवतीह लोके ॥

सुकुमारेण कथित तस्या दर्शनमन्तरा शोभनकवितानिर्माण न

सभवति। तदा प्रशान्तेन तरयाश्चित्राय प्रयतितम्। नायिकायाः सेवक-साहाय्येन तस्याश्चित्रमुपलब्धम्।

एकदा वशानिनादमुपश्रुत्य नायिकाया रागमयी वृत्तिरुल्लास। तस्या सखी कुन्दकलिका स्नेहमसृणे वार्तालापे तामपृच्छत्—कस्माद् भवती कविवरमेव वररूपेणेच्छति? तदा नायिकाब्रवीत्—बाल्यात् प्रभृत्येव मम मानसे स्वप्न एष सञ्चितो यदह कवे पत्नी भविष्यामि। तयोर्वार्तालापमध्य एव पूर्णचन्द्र कुन्दकलिकाया' पितुः पत्र विद्युत्प्रभानामत. समागत समार्पयत। तत्र लिखितमासीत्—यदाह पञ्जाबप्रदेशात् समागत', तदा रामपुरे मम विश्वम्भरनामा प्रतिवेशी कुन्दकलिका स्व· पुत्रायायाचत। तस्य प्रशान्ताभिधानस्तनय' "बहूबाजारे" चिकित्सक. सन् स्वगृह एव निवसति। यदि सोऽप्यनुमति ददाति, तर्हि तस्मा एव कुन्दकलिका देयास्ति।

विद्युत्प्रभयोक्त—प्रशान्तस्तु सुविदित एव। तेन सह तव गान्धर्व-विवाह' कथ न सम्पद्यताम्। तत कुन्दकलिकाया हृदये पीडास्ति। अत' सास्वस्था वर्तते—इत्यपदिश्य चिकित्सक प्रशान्त आहूत'। स आगत्य रोगपरीक्षणार्थं प्रथम हस्त द्रष्टुमियेष। तदा विद्युत्प्रभा रुग्णायिता कुन्दकलिकामुवाच—पाणि प्रसार्यताम्। अत्रभवता ग्रहणीय. स.। · ··· आर्ये। दृढ धार्यतामय पणिर्नो चेत् पुनरपसारितो भवेत्।

तत' प्रशान्त' सम्यक् परीक्षणाय हृत्परीक्षणयन्त्र कुन्दकलिकाया वस्त्रावृते वक्षसि स्थापयित्वा तस्यापरभाग स्वकर्णकुहरयोर्निदधे। अथ यदोपचाराय सूचीमुखेनौषध तस्या शरीरे प्रवेशयितुमैच्छत्, तदा कुन्दकलिका नाह रुग्णेति सस्मितमुदितवती। अथ चिकित्सक. कथितवान्—तर्हि कस्मादिद नाटकं रचितम्। तदानीं विद्युत्प्रभा कुन्दकलिकायाः पितु. पत्रं प्रादर्शयत् पत्र निपठ्य प्रशान्तेनोक्त—तत्तथा भवितु शक्नोति। तत्रैका बाधा वर्तते। यावन्मदीय सखा विवाहितो न भविष्यति तावदहमपरिणीतो वर्तिष्ये। स च—

सखा मे सुकुमाराख्यस्त्वदनुध्यानतत्परः।
कवितापक्षपातात्ते मग्नो नैराश्यसागरे॥

विद्युत्प्रभाया कृते समस्येयमुपस्थिता ; कथ तस्याश्चिरसञ्चित स्वप्न पूर्येत ?

इतश्च सुकुमारः कवितारचनाऽभ्यासे लीनोऽविद्यत। प्रशान्तस्तस्मै तस्य दिनस्य सर्व वृत्तान्त निवेदितवान्।

नवमेऽङ्के विद्युत्प्रभाया' स्वयवरो भवति। तत्र पुलक-सुकुमारयो प्रतिस्पर्धासीत्। पुलकोऽपि कवितामाध्यमेन विद्युत्प्रभाया. परिचित. आसीत्। नायिका प्रथममन्तर्व्यूहे ( Interview ) पुलकमाकारयामास। विद्युत्प्रभाया' प्रश्नानुसार पुलकेनोक्त—आविद्याथिजीवन कविता करोमि। अद्यावधि कोऽपि ग्रन्थो न मुद्रित। भवत्यास्माक कवितास्तु पठिता भविष्यन्ति। पुलकस्योत्तरैर्विद्युत्प्रभा तस्य विषये सम्यग् धारणां निर्मातु नाशक्नोत्। ततो नायिका प्रशान्त पुस्तकालये स्थातु निर्दिश्य सुकुमारमन्तर्व्यूह आहूतवती। षट्पद्यात्मिका सुकुमारकृतिर्वस्तुत. शोभनासीत्। तस्याश्चरममिद पद्यम्—

दिष्ट्या सारथ्यमस्मिन्कुरुयसि यदि मे जीवनपथे
पन्थान स प्रयायाद्विषममपि विनोद्घातविपद्।
दैवात्प्रेमप्रवाहे स्नपयसि यदि ममाभीप्सिततमे
साफल्येनाभिराम सपदि मम भवेदूषरजनुः॥

अथ कुन्दकलिकयोक्त—किमेतस्य प्रमाण यदिमा. कविता भवद्भिरेव विरचिता. ? श्रुत्वैतत् सुकुमारश्चुक्रोधावोचच्च—यदि भवत्या मम योग्यताया उपरि सन्देहस्तर्हि स ममाग्निप्रवेशादपि दूरीकर्तुं न शक्यते। एषोऽह यामीति कथयित्वा यावत्सुकुमार' प्रतिष्ठते, तावद् विद्युत्प्रभा द्वारमवरुरोध। अश्रुपूरितनयनया तयोक्त—न भवानतः परमितो गन्तुमर्हति। भवता कुन्दकलिकायै कुप्यताम्। मया भवत किमनिष्ट रचितम्। अथ तदानी कुन्दकलिकापि क्षमामयाचत। सुकुमारेणोक्त—परिहासशरेण मम वधस्य कतमोऽधिकारो भवत्या' ? तया झटित्युक्तम्—अह तावद् भवता स्याली न भवामि किम् ? ततः सा विद्युत्प्रभाया' पाणि सुकुमारपाणौ निदधे। पाणिग्रहणानन्तर सुकुमारो विद्युत्प्रभामुक्तवान्—

शरीरिणी त्व कविता श्रितासि मा
यतस्ततोऽह कविरेव शाश्वतः।

स्वकीयभासा रहितोऽपि चन्द्रमा
यथा भवत्यर्करुचा मनोहर' ॥

तत' पुस्तकालयसस्थितेन प्रशान्तेन कथित—किमेकाकिनैव पाणिग्रहणानन्द लप्स्यसे ? तदा चिरञ्जीव कुन्दकलिकायाः पाणि प्रशान्तपाणौ धृतवान्। ततो माल्यविनिमय सवृत्त।

**नाट्यशिल्पम्**

नाटकेऽस्मिन् रङ्गमञ्चमकेता अङ्कारम्भ उपलभ्यन्ते। एकां पक्तिमारभ्य पट्पक्ति यावत्तेषां विस्तार'। एतादृग् दीर्घा रङ्गसङ्केता विदेशिप्रभावस्य सूचका॰ सन्ति। प्रस्तावनायां सस्कृतनाटकप्रेक्षकाभावस्य सम्यगुपस्थापना विहिता।

विष्णुपदो हास्यप्रिय॰ कवि'। स पदे पदे दर्शक हासयति। अस्मिन् छायातत्त्वस्य बहून्युदाहरणानि विलसन्ति।

प्रवेशक–विष्कम्भक–चूलिकार्थोपक्षेकाणामभावोऽस्मिन् विद्यते। अर्थोपक्षेपकोचिता सामग्री एकोक्त्या पत्रादिना च प्रेक्षकस्य सम्मुखे समुपस्थापिता।

## धनञ्जयपुरञ्जयम्

विष्णुपदविरचिते धनञ्जयपुरञ्जये नाम नाटके सप्ताङ्का विलसन्ति। अस्य प्रकाशन काञ्चनकुञ्जिकेन सहैवाभवत्।

**कथासार:**

पल्ल्यां कुटीद्वारि धनञ्जयनामा वृद्धो ब्राह्मण स्वभागधेय क्रोशन् तिष्ठति स्म। तस्य पत्न्या मृत्योर्विंशतिसमा व्यतीता। तदा पुरञ्जय॰ शिशुरासीत्। अहमेव त पुष्णामि स्म। सम्प्रति स मा न पृच्छति। इदानीमह वाराणसीं गत्वा वयसश्शेष गमयितुमिच्छामि। अक्षिणी प्रक्षीणे सञ्जाते। तत्र कथ यामि। एव चिन्तयतस्तस्य पुत्र॰ पुरजयो दिवसं गमयित्वा गृहमायात'। पित्रा पृष्ट' स उवाच—अहं भवानिव न कूपमण्डूक॰। अनुदिन मया मल्लशाला गम्यते। जनकेनोक्तं—मरणासन्नोऽहम्। यदि मम न श्रोष्यसि, तर्हि पश्चात्तप्स्यसि। अह काश्या विश्वनाथस्य दर्शनं चिकीर्षामि। पुरञ्जयेन कथितम्—एतत् सुष्ठु। परन्त्वह भवता सार्धं तत्र गन्तुं न शक्नोमि, यतो हि मम मल्लशाला-

गमनमत्यावश्यकम् । अथात्यधिक पितुराग्रहात् स तेन सम वाराणसी गत ।

द्वितीयाङ्के पुरञ्जय' पितर्युपरते गङ्गायास्तटे वृक्षतले निषण्ण' पितर प्रति कर्तव्यपालनात् परितुष्ट आलस्याद् यावन्नेत्रे निमीलयति, तावद् भवानीवल्लभ भूतेश्वर पश्यति। शिवेनोक्तम्—अरे मूर्ख ! पश्य तव तातो नरके निमग्न.। यमदूतैस्ताडितो धनञ्जयो विलपति स्म—अह तु शिवपुर्यामुपरत:, तत. कस्मान्मे नरकभोग । नूनमिद मया मम कुपुत्रस्य कारणाद् भुज्यते दु खम्। इतश्च स्वप्ने पुरञ्जयो यमदूतान् भर्त्सयन्नुवाच—विरमत, पितुस्ताडनस्य फल व' स्वादयामि। अह भारतस्य विख्यातो मल्लोऽस्मि। ‧ । नरकस्य द्वितीये दृश्ये शिव-स्तमभर्त्सयत्—तवैव पापादय पिशाचता प्राप्य कष्ट भुक्ते। तदा पुरञ्जय' शिवस्य चरणौ गृहीत्वा पितु त्राणस्योपाय पृष्टवान्। शिवोनोक्त—माहिष्मत्या नृपते समीप गत्वा तस्यातिथिसेवापरायणताया एकदिव-सस्य पुण्य याचस्व। तावतैव स मत्सायुज्य प्राप्स्यति।

तृतीयाङ्के पुरञ्जयो माहिष्मती गच्छन् मध्येमार्ग कञ्चन निषाद विलोकितवान्। मार्गं पृष्टो निषादोऽब्रवीत्—अद्य नक्त वनादस्माद् गन्तु न शक्यते। पूयतामद्य मे कुटीरम्।

चतुर्थाङ्के निषादस्तस्मै भोक्तु फलानि प्रायच्छत्। ततस्तस्य वास' कुटीराभ्यन्तरे निर्दिश्य स्वय तस्य रक्षायै धनुर्धर. कुटीराद् बहि. सावधानोऽतिष्ठत्। अथ पुरञ्जय प्रातरुत्थाय निषाद रक्तरञ्जित मृत-मवलोकितवान्। सिंहस्त जघान, यस्तस्य बाणेन हत । तद् दृष्ट्वा स उवाच—

अभ्यागतार्थे त्यक्तासुस्त्वमाशु स्वर्गमुद्गत' ।<br>
दूयेऽह बहुशो धन्यो मज्जन् पापमहार्णवे ॥

तत' स काष्ठानि सञ्चित्य तस्य चरमा सत्क्रिया चक्रे।

षष्ठाङ्के पुरञ्जयो माहिष्मतीराजप्रासादमाससाद। तत्र स्वस्वागतार्थ-मागतान् राजपुरुषान् स ऊचिवान्—नाह राजानमन्तरातिथ्यं स्वीकरिष्यामि।

राजान प्रेषयत। अथ राजा समागत्य तस्य चरणयो' स्पृष्ट्वा प्रणनाम। स राज्ञे चुक्रोध—भवान् सेवकैरातिथ्य सम्पादयति अहो

भवत आतिथ्यम् ? राजा क्षमां याचित्वाब्रवीत्—आसन्नप्रसवाया पत्न्या सुव्यवस्थाया व्यस्तोऽहं पूर्वं नागच्छम्। तत पुरञ्जय शिवाज्ञानुसार त तस्यैकदिवसस्य पितु सङ्गतये पुण्यमयाचत। राजोवाच–अद्य भवान् ममातिथिशालायामातिथ्यमनुभवतु। श्वोऽहं स्वकीयमाह्निक पुण्य भवत' पित्रे प्रदास्यामि।

सप्तमाङ्के भूपतेरतिथिभवने पुरञ्जयः सुष्वाप। स्वप्ने शिवस्त सबोध्य ब्रवीति स्म–इदानीं त्व ज्योतिर्मयशरीर दिव्याम्बरधर स्वपितरमवलोकय। धनञ्जयेनोक्त—सम्प्रत्यहं मोक्ष लब्ध्वा शिवसायुज्यमनुभवामि। ततो हर्षनिर्भर. पुरञ्जयः शिवमुवाच—भगवन्! भवतामनुग्रहेण मम पितुरुद्धार. समजनि। शिवेनोक्तम्—अय माहिष्मतीनृपतेः प्रतर्दनस्य पुण्यप्रभाव.। अद्य नक्त राज्ञो गेहे यो जन्म प्राप्स्यति, स तव रक्षायां सिंहेन निहतो निषाद एव।

प्रथमाङ्कस्यारम्भो धनञ्जयस्य एकोक्त्या भवति, द्वितीयाङ्कस्य च पुरञ्जयैकोक्त्या।

पञ्चम-सप्तमाङ्कयोरारम्भे पुन. पुरञ्जयस्यैकोक्ती वर्तेते। रङ्गनिर्देशा. प्राङ्कमध्ये च विहिताः।

चारित्रिकविकासस्य उच्चकोटिका कलना प्रस्तुतनाटकस्य विशिष्टा विभूति। हास्यप्रवणता तु विष्णुपदस्य प्रत्येकस्या कृतौ विलसति। कविना नवनाट्यविधानै सुसज्जैर्नाटकैर्न केवल रसनिर्झरिणी प्रवाहिता, अपि तु तैर्नवीनतापूर्णस्य चारुजीवनस्य पद्धतिरपि निर्दिष्टा।

## कपालकुण्डला

कपालकुण्डलाया मूललेखको वंकिमचन्द्रोऽस्ति। विष्णुपदस्य पित्रा कथेय सस्कृतभाषायामनूदिता। कपालकुण्डलाया अभिनय संस्कृतसाहित्यपरिषद. ३७ तमे वार्षिकोत्सवे समभवत्।

नवकुमार. शिरसि काष्ठभार विधाय सन्ध्यासमये गङ्गातटमासादितवान्। तत्र कोऽपि मानवो नौका वा नासीत्। दूरे प्रकाश दृष्ट्वा तत्रागच्छत्। तत् श्मशानमासीत्। तत्र स शवासीन कापालिक व्यलोकयत्। कापालिको नवकुमारस्य भोजनादेर्व्यवस्था कृत्वा जगाद—यावन्नागच्छामि तावत्त्वयात्रैव स्थीयताम्।

अथ कपालकुण्डला नवकुमारमवोचत्--कापालिकै पूजा नरमांसेन सम्पाद्यते। एहि, पलायनस्य मार्गं ते निर्दिशामि। एतस्मिन्नेव समये कापालिक कपालकुण्डलामाह्वयन् धावॅश्चागत। कपालकुण्डला भयात् पलायिता। भीतोऽपि नवकुमार स्व पन्थान नात्यजत्। मार्गे कयाचिद् भैरव्या नियतिगानं गीतम्।

हुताशन प्रज्ज्वलन्नासीत्। कापालिकस्तत्रैव ध्यानमग्न आसीत्। नवकुमारो यूपे निबद्धोऽविद्यत। अथ शनै कपालकुण्डला समागता खड्ग च चोरयित्वा पुनरव्रजन्। कापालिको ध्यानानन्तर नवकुमारस्य मस्तके रक्ततिलकमटीकत। कण्ठे रक्तमालामर्पितवान्। नवकुमार मोक्षाय प्रयतमानमवलोक्य कापालिक ऊचिवान्—मूर्ख! अद्य ते जनु सफल वर्तते। भैरवीपूजाया तव मासमुपहरिष्यामि। इति कथयित्वा स खड्गमन्विष्यति स्म। खड्गमनुपलभ्य स कपालकुण्डला शब्दापयामास। अथ कापालिकस्तामन्वेष्टु गतवान्। तत सा खड्ग-हस्ता समागन्य नवकुमार विगतबन्धन विधाय तेन सह पलायिता। कापालिको नवकुमारमप्यदृष्ट्वा तत्सर्वं कपालकुण्डलाया कार्य ज्ञातवान्।

ततोऽधिकारिणा भवानीपूजकेन नवकुमार उक्त—अद्य माता कपालकुण्डला प्राणान् पणीकृत्य भवन्त ररक्ष। भवाँस्ता रक्षतु। तया सह परिणय करोतु। तेन स्वीकृतम्। अधिकारी वैदिकमन्त्रैस्तयोः परिणय सम्पादितवान्।

विपिनमार्गेण यात्रा कुर्वाणो नवकुमारो मतिनाम्नी यवनी चौरै-स्ताडिता व्यथिता स्कन्धे निधाय पान्थशालायामानयत्। पान्थशालाया एकस्मिन् कक्षे कपालकुण्डला जगौ—

त्वयि जगदखिल वसति सलील
भुवनगतास्त्वन्मायामुग्धा. ।
रविशशितारा किङ्करनिकरा
पालयन्ति तव नियममशेषम्॥

मति कपालकुण्डलाया लोकोत्तरलावण्येन प्रभाविता तस्यै स्वकी-यान्याभूषणानि समर्पयामास ततो मतिरागरानगर गत्वा तत्र सम्राजोऽ-कबरस्य बुद्ध्युत्कर्षं विफलीकृत्य, जहाँगीरस्य मेहरुन्निसाम्प्रत्यासक्ति

विलोक्य निराशा तत परावृत्ता। तत सा नवकुमार मिलित्वा गीतवती—

किमु मयि दयित कठोर।
चरणनताया शरणगताया नोचित इह परिहार।

नवकुमार गन्तु व्यवसितवान् तदा सोवाच—मह्य दासीपद दीयताम्। न मया पत्नीपद याच्यते। तुभ्यमह धन, मान, प्रणय, कौतुकादिक सर्व प्रदास्यामि। नवकुमारेणोक्तम्—

"दरिद्रो ब्राह्मणोऽहम्। इह जन्मनि दरिद्र एव स्थास्यामि। धन-लोभान्नाहमिच्छामि यवनीवल्लभत्वम्।"

मत्योक्तम्—भवत कृतेऽह आगराया राजसिंहासनमुज्झितवती। नवकुमार आचख्यौ—तत्रैव पुनर्गम्यताम्।

मतिरुक्तवती—न तत्र यास्यामि, सम्प्रति भवन्तमुपलभ्यैव स्थास्यामि। नवकुमारेण चिन्तितम्—एतादृगेव रूप मम प्रथमभार्याया आसीद् यदाह ता शयनागारान् नि सारयामि स्म। अथ सोऽपृच्छत्—कीदृशस्ते परिचय। मत्योक्तम्—अह भवत पूर्वपत्नी पद्मावत्यस्मि।

पञ्चमाङ्के कपालकुण्डला स्वननान्दुः पतिं तस्या वशे कर्तुं यदा मुक्त केशिनी रात्रौ वने भ्रमति तदा मतिस्तामभिलत्। एतस्मात् प्राङ् मतिः कापालिक भग्नमन्दिरे प्रज्ज्वलितहुताशनस्य सविधे ध्यान कुर्वन्त मिलितवती। तस्मै कपालकुण्डलाया मृत्युमन्तरा स्वा योजना कथयामास यदह ता नवकुमारात् पृथक्कर्तुमिच्छामि। सा मम प्रणयमार्गे कण्टक वर्तते। कापालिकस्तु कपालकुण्डलाया मृत्युमेवेच्छति स्म। एतस्मिन् समये मति पुरुषवेशे आसीत्। मतिः कपालकुण्डलामुक्तवती—त्वयेहैव स्थीयताम्। यावदह नायामि। परतु सा नभोमेघमण्डलावृत वीक्ष्य गृह गतवती। मतिस्तां तत्र नोपलभ्य तस्या गृहे पत्रमेक निचिक्षेप।

षष्ठेऽङ्के गृहकर्मव्यापृता कपालकुण्डला पश्चात् पठिष्यामीति कृत्वा तत् पत्र कबर्या ररक्ष। तत क्वचित् पतित नवकुमारेणावलोकितम्। पत्र पठित्वा तस्य मनसि कपालकुण्डला प्रति विश्वासाभावः सञ्जात.। पूर्वमपि तस्या रात्रिभ्रमणकारणाद् सन्देह' पद लब्धवानासीत्।

अथ कपालकुण्डला पत्र कबरीबन्धेऽनुपलभ्य ब्राह्मणवेषधारिण कुमार मिलितु बहिर्निश्चक्राम। नवकुमारोऽन्वगच्छत्। स मार्गे कापा-

लिक दृष्टवान्। तेन नवकुमारोऽभिहित —कस्मात्त्व तां पापिष्ठा कपाल-कुण्डलामनुगच्छसि ? एहि, दर्शयामि तां यत्सा किं करोति। तत' कापालिक उक्तवान् पूर्व त्वां ताञ्चान्विष्यन् बालुकागिरे पतित्वा त्रुटित-बाहुरस्मि सवृत्त। भवानी मा स्वप्नेऽकथयत्—यत्तस्या पापिष्ठाया बलिप्रदानमेव तव पूर्वकृतपापस्य प्रायश्चित्तम्। सा त्वया सहापि विश्वासघात कृतवती। अद्य त्वयैव स्वहस्ताभ्या तस्या बलिर्दीयताम्। एतेन कर्मणा तव पापप्रक्षालन भविता।

सप्तमेऽङ्के भग्नमन्दिरे मति कपालकुण्डलायै स्वकीय वास्तव परिचय प्राददात्—अह रामगोविन्दघोषालस्य कन्यास्मि पद्मावती। मयेव पान्थशालाया भवत्यै भूषणान्यासन्नुपहृतानि। अह तव सपत्नी अस्मि। नवकुमारात् सम्बन्धविच्छेदाय मयैष वेषोऽङ्गीकृत। त्वया मम स्वामिनो नवकुमारस्य सङ्ग परित्यज्यताम्। रक्ष्यताञ्च मम जीवनम्।

कपालकुण्डलया चिन्तितम्—अल वैभवै। विपिनचारिण्यह पुनरपि वनविहारिणी भविष्यामि। इति चिन्तयित्वा सा मतिमुक्तवती—श्वस्त्व मम प्रवृत्ति न लप्स्यसे।

इतश्च कापालिके ब्राह्मणकुमारेण ( मत्या ) सह सस्थिता कपाल-कुण्डलामदर्शयत्। नवकुमारस्तद् दृष्ट्वा व्याकुलतामनुभूतवान्। तस्मै कापालिको मदिरा प्रायच्छत्। ब्राह्मणवेशधारिणी मति• प्रतिदाने स्वीयमङ्गुलीयक प्रदाय परिरभ्य च तत• प्रातिष्ठत। तस्यास्तथाऽऽलिङ्गन दृष्ट्वा परिव्याकुलाय नवकुमाराय कापालिक' पुन• सुरां प्रादात्।

किञ्चित्कालानन्तर कापालिको नवकुमारश्च कपालकुण्डलाममिल-ताम्। कापालिको नवकुमारमब्रवीत्—आनीयतामिय स्नानानन्तर पूजागृहे। अह तावच्चलामि। मार्गे नवकुमार कपालकुण्डलायाश्च रणयोनिपत्याब्रवीत्—रक्ष मा, सकृत्कथय, न त्व विश्वासघातिनी। अह त्वामुरसि निधाय गृह नयामि।

कपालकुण्डलोक्तवती—नाह विश्वावसघातिनी। यो ब्राह्मणवेशधारी भवता दृष्ट सा पद्मावती वर्तते। इति कथयित्वा सा तस्मै तस्या अङ्गुलीयकमदर्शयत्। ततो गृहगमनस्य प्रार्थन नवकुमाररस्य प्रत्या-

ख्याय साभिहितवती—इदानीं भवानीचरणतलमेव मम शरणम्। ततो नवकुमारो यावत्ता बाहुभ्या परिरब्धुमिच्छति तावन्नदीतटमत्रुट्यत्। कपालकुण्डला जले निममज्ज। नवकुमारोऽपि जलेऽकूर्दत्।

प्रस्तुतरूपकस्याङ्का दृश्येषु विभक्ता सन्ति। अनेकदृश्येष्वेकमेव पात्र वर्तते। अङ्कभागे सूचनाप्रदानस्य रीतिरङ्गीकृता। अर्थोपक्षेपकाणामभावो विद्यते। मते' कार्यकलापश्छायातत्त्वानुसारी वर्तते। सप्तमाङ्के कथाया दृश्य रङ्गपीठस्य द्वयोर्भागयोरस्ति। एकस्मिन् भागे मति कपालकुण्डला च वर्ततेऽपरेऽशे कापालिक नवकुमारौ तिष्ठत।

## अनुकूलगलहस्तकम्

अनुकूलगलहस्तकमङ्कद्वयसमन्वित प्रहसन विद्यते। अस्मिन् नायकस्य दिव्येन्दुसुन्दरस्य नायिकया यामिन्या सह विवाह सम्पद्यते। इद विद्वत्सहृदयाना परितोषाय राकायामभिनीतम्।

नायको दिव्येन्दुसुन्दरो राची जिगमिषुरासीत्। तस्य मित्र यामिनीकान्तः संक्षेपेण यामिनीति कथ्यते। दिव्येन्दुशेखरो दूरभाषेण यामिनीत्युच्चारणपूर्वक यामिनीकान्तेन सह सम्पर्कं साधयन्नपृच्छत्—किमिद यामिनीगृहम्? त्रुटिवशात् दूरभाष यामिनीनाम्नीनायिकया सम्बद्धम्। सोवाच—कथय कि भवान् मया सह वार्तालापमिच्छसि? दिव्येन्दुसुन्दरेणोक्त—नहि नहि अह यामिनी (यामिनीकान्त) वक्तुमिच्छामि अस्त्येकं महत् प्रयोजनम्। यामिनी पृष्टवती—कि तत् प्रयोजनम्? अद्य यामिनीसहायेन मयास्ति राची गन्तव्या। यामिनी भर्त्सयामास—धृष्ट। त्वं नरक याया:। त्व वनजोऽसि। दिव्येन्दुनोक्त—बी० ए० अस्मि दिव्येन्दुसुन्दरो नाम। ततस्तयोर्मध्ये उष्णालाप सवृत्तः। दिव्येन्दुना कथितम्-भवती यामिनीकान्त दूरभाषे आकारयतु। यामिन्यपि ज्ञातवती यद् भ्रमस्य कि मूलम्। तयोक्तम्—अत्र यामिनीकान्तो न वर्तते। दिव्येन्दुनोक्तं—तस्येदृशेन व्यवहारेणास्मि पर्याकुलः। यमिन्योक्त—राची गत्वा चिकित्सा कारयतु भवान्। दिव्येन्दुरुक्तवान्—अद्यैव यामि सन्ध्यासमये रेलयानेन। कि तु यामिनी विना तत्र कुत आनन्द.? भवती तं कथयतु यत्तदर्थं मया स्थान सरक्षितम्।

यामिन्योक्तम्—अद्य यामिनीगमनं न तत्र सम्भाव्यते। द्वित्रिदिवसानन्तरमेव तद्गमन भवितु शक्नोति। दिव्येन्दुना कथितम्—तर्हि स मद्वचनाद् वक्तव्यो यत्तत्र स मम सविध एव निवसतु। यामिन्योक्त तदप्यनिवार्यकारणैर्न भवितुमर्हति। तन्निवासो हिनुपल्ल्या रञ्जनकुटीरे भवितु शक्नोति। दिव्येन्दुनोक्त—तत्रैव मिलिष्यामि।

यामिन्या सखी शाश्वती त परिहास श्रुत्वा यामिनीमभर्त्सयत्, अकथयच्च परिहासस्य पृष्ठे वर्तते किमपि विशेषम्। अथ ते द्वेऽपि दिव्येन्दवे वचनदानाद् रांची गन्तवत्यौ।

द्वितीयेऽङ्के यामिन्या रांचीगृहस्य द्वारपालो रामावतार' स्वमित्रं विन्ध्याचलं वक्ति यद् गृहस्वामिनी जलप्रपात द्रष्टु गतवती। मया न कचिद् गन्तव्यम्। विन्ध्याचलेनोक्त—नगरेऽस्मिन् भद्रवेशे मित्ररूपा दस्यव' सर्वं चोरयन्ति। त्व सावधानो गृहं रक्ष। अथ तदानीमेव दिव्येन्दुसुन्दर आगत्य यामिनीविषये पप्रच्छ। रामावतारस्त दस्युं मत्वा विन्ध्याचलस्य सहायतया तं तस्यामेव वृष्या बबन्ध या तस्मै स्थातुं प्रदत्तासीत्। उच्चैर्मा शब्दापयत्विति तस्य मुखे वस्त्रं सम्भृतम्। ततो यावद्रामावतारो रक्षिण आनेतुं प्रयाति, तावदेव सखीसमेता समायान्ती यामिनी दृष्टा। अथ दिव्येन्दुना सह वार्तालापे कृते यामिन्या समनुभूत यदस्य परिहास एव घोरदण्डप्राप्तेः कारणमह मेवास्मि। अस्य दण्डं दिव्येन्दुना निर्दिष्टं यद् यामिनी यावज्जीवनं ममावरोधे बन्दिनी भवेत्।

शाश्वती तयो पाणिग्रहण सम्पाद्य तमाशयमपूरयत्। तदा दिव्येन्दुनोक्त—'किङ्करनिग्रहो मे साम्प्रतमनुकूलो गलहस्त इव प्रतिभाति।'

## मणिकाञ्चनसमन्वयः

प्रस्तुतेऽङ्कद्वयसमन्विते प्रहसने पञ्च दृश्यानि राजन्ते। अत्र कथानुसारं शर्शरीक-दर्दुरकनामानौ द्वौ धूर्तावास्ताम्। एक' शिरसि भाण्ड निधाय मधु विक्रीणाति स्म अपरो गुडम्। एकदा द्वावपि नगरस्यैकस्मिन्नेव भागे गतवन्तौ। तत्रोभौ विवदमानौ परस्परस्य भाण्डं स्फोट-

यामासतु । ततो जनैनिर्णय. कृतो यदुभाभ्यामुभयोर्वस्तुनोर्मूल्यं दीयताम्। ततस्तौ द्वावपि पारस्परिक वस्तु निन्दतः स्म। ततो धनपतिरुभयोर्वस्तुनी आस्वाद्योक्तवान् युवा द्वावपि तस्करौ जनान् प्रवञ्चयथः। अह राजपुरुषानानाय्य तेभ्यो युवा दास्यामि । ततो द्वावपि कर्णौ जगृहतुः । नाहमतः परमेव करिष्यामीति च द्वावप्यूचतुः। कि तु तयोः प्रश्न आसीत् यत् कथ जीविका लभावहे ? धनिपतिस्तयोरेकमादिशत्—मम गाश्चारय, अपरमुवाच—मम रसालवृक्षान् तथासिञ्च यथा सर्वत्र कर्दमं भवेत्। भोजनातिरिक्त युवा प्रतिमासं १० रूप्यकाणि प्राप्स्यथः।

द्वितीये दृश्ये रसालवृक्षस्य नीचैर्बृहद्गर्तो दृश्यते। ततो निःसारिताया मृदः स्तूपोऽवलोक्यते। गर्ते दर्दुरक खनन्नासीत्। दर्दुरकस्यैकोक्तिरस्ति—यावद्दिनममुमसिञ्चम्। किन्त्वस्यामूषरभूमावार्द्रता नायाता। पिपासितोऽस्मि। अयं वृक्षो मूलेषु खनित्वा निपातनीयः। तदानीमेव तत्र शर्शरीक आयात स चोक्तवान्—कि करोषि ? दर्दुरकेणोक्त—नायं वृक्षः, अपि तु राक्षसः। इमं विनाश्यैव विश्रमिष्यामि। धनपतेरागमनात् प्रागति दूरं पलायिष्ये। अथ खनित्रं धातुपात्रेण संघृष्टं श्रुत्वा शर्शरीकः पृष्टवान्—किमिदम् ? स उवाच—न किमपि।

ततः शर्शरीक आत्मनो वृत्तान्तं कथयामास—गोचारणसमयेऽहं सुप्तवान्। मयि सुप्तवति कपिला गौ. पलायिता। अथान्वेषणे कृते सैकस्मिन्नुद्याने पादपान् ध्वसयन्ती दृष्टा। यदाहं तस्याः समीपमगच्छम्, तदा सा पुच्छमुत्थाप्य पुन' पलायिता। उद्यानपालो मा ग्रहीतुमैच्छत्। अह धावित्वा कथञ्चिद् इहायात.। गौर्गृहं गतास्ति। अह त्विद प्राणान्तकं कार्यं त्यक्ष्यामि।

रात्रौ द्वावपि सहैव सुषुपतु । गभीरनिद्राया दर्दुरकस्य नासिकानाद' समुद्भूतः। तदा शर्शरीको रसालतलमासाद्य तस्मिन्नेव गर्ते 'माचिस'-शलाकाप्रकाशेन रूप्यकसम्भृतं ताम्रकलशमपश्यत्। ततः स तमादायाव्रजत्। अथ दर्दुरकस्तमन्वधावत्। ताम्रकलशमग्रहीत्। ततो द्वावप्यर्धमर्धं गृहीतवन्तौ। कलशं विक्रीय तस्याप्यर्धार्धमूल्यग्रहणस्य निर्णयः कृतः। शर्शरीकस्य गृहे कलशो निक्षिप्तः।

द्वितीयाङ्के शर्शरीकः पुत्रं शिक्षयति—यदि दर्दुरक आगच्छेत्तर्हि

"शर्शरीक उद्वमनरोगान् मृत." इति वाच्यम् तत' स खट्वायां शयान' सञ्जात'। दर्दुरक एतत्सर्व द्वारस्थः शुश्राव। अथ तमागत दृष्ट्वा शर्शरीक-पुत्रश्चतुरक उवाच—जनको मे मृत'। तस्य शरीरमवलोक्यताम्। कलशप्रवृत्तिं नाह जानामि। दर्दुरकेणोक्तम्—अस्यौषध करोमि। भवान् स्वगृहे एकलो वंशवर्धन.। अयञ्च सक्रामको रोगः। अहमेव सर्वमेकाकी करिष्यामि। यदि चाहं म्रिये तदापि कापि हानिर्नास्ति। चतुरकोऽ-ब्रवीत्—अहमेन श्मशाने नीत्वा वह्निकृत्य करिष्यामि। दर्दुरकोऽब्रवीत्—मा तावत्। यतो हि—

संक्रामकरुजा यो हि पुण्यात्मा गतजीवन'।
तस्य सद्यो विमुक्तस्य मुखाग्निर्न प्रशस्यते॥

त्वं तावद् गत्वा मातरमाश्वसिहि। अहमेकल सर्वं करिष्यामि। चतुरकेण चिन्तितं बुद्धिमान् पिता मे स्वयमेवोपायान्तर करिष्यति। इति चिन्तयित्वा स गत.। ततो दर्दुरकस्तस्य चरणौ निबध्य श्मशान नीतवान्। अथ चिताया शर्शरीक-शरीर धृतम्। चिताज्वालक पाण्डुरकः सुरानयनाय गतवानासीत्। दर्दुरकेण चिन्तितम्—अहमेव कस्मान्न चितां ज्वालयामि। तावदेव जनैरनुधावितो दस्युराजस्तत्रागतः। दर्दुरकस्त दृष्ट्वैव मृतवत् सुष्वाप। अनुधावत्सु जनेषु परावृत्तेषु दस्यव-स्तत्रैव धनविभाजनमारेभिरे। श्मशानाधिकारी पाण्डुरको मागच्छेद् इति तस्य प्रवृत्तिमन्विष्यन्तस्ते चिताया धृत शवमवलोकायामासुः। ततस्तै. कथितम्—

गृह्णानाः परवित्तानि जाता. पातकिनो वयम्।
प्रायश्चित्तमभिस्तोकं शवसत्कारतोऽस्तु नः॥

इति ते चिताज्वालनाय व्यवसितवन्त'। तदा शर्शरीकः पार्श्वपरिवर्तनं कुर्वन् 'हीं हीं हीं' इति चकार दर्दुरकोऽपि 'हां हां हां' इत्यनुचकार तच्छ्रुत्वातिशयभीता दस्यव सर्वा सम्पत्ति विहायापलायन्त। ततः शर्शरीकश्चिताया अवरुरोह। दर्दुरको गुल्माद् बहिरागतः शर्शरीकमुवाच–अरे नराधम! अपि नाम जीवसि त्वम्? शर्शरीक उवाच—नाह शर्शरीकः। अहं तद्देहप्रविष्टः पिशाचोऽस्मि। अहं त्वां खादिष्यामि।

इति कथयित्वा स दर्दुरकमालिलिङ्ग । अथ तौ सस्नेहमभाषेताम् । दस्यूनां सम्पत्तेरर्धमर्धं व्यभजताम् । एष एव तयोर्मणिकाञ्चन-संयोगः ।

## शिल्पम्

प्रस्तुतप्रहसनस्य मूलकथा वङ्गेषु प्रसिद्धा । अस्मिन् स्त्री भूमिका नास्ति । इयमेका महती विशेषतास्य प्रहसनस्य । बहुश प्रहसनानि प्रायोऽश्लीलश्रृङ्गारस्य भाण्डानि सन्ति । विष्णुपदेन प्रहसनमिद विरचय्य नवादिक् प्रदाशता ।



## लीलाया नाट्यसाहित्यम्

लीलारावोनाटकलेखिकासुप्रसिद्धकवयित्र्या क्षमायास्तनूजा वर्तते। अस्या विवाहो हरीश्वरदयालेन सह समवर्तत। हरीश्वरदयालो प्रथमतो भारतीयशासनसेवाया विदेशसेवाया नियुक्तोऽभूत्।

लीला "टेनिस" क्रीडायामग्रतामुपलब्धवती। सस्कृते लेखनस्य प्रेरणा सा मातु प्राप्तवती। तया जनन्या कथात्मकरचना' सम्यक् रूपकायिता। लीलाया कृतय १९५५ ईसवीयाब्दमारभ्य १९६१ ईसवीयाब्द यावद् मञ्जूषाभिधानाया सस्कृतपत्रिकाया प्रायश' प्रकाशिता। तस्या कृतिषु निम्नलिखिता' प्रसिद्धा सन्ति—

( १ ) गिरिजाया प्रतिज्ञा। ( २ ) बालविधवा। ( ३ ) होलिकोत्सव'। ( ४ ) क्षणिकविभ्रम। ( ५ ) गणेशचतुर्थी। ( ६ ) मिथ्याग्रहणम्। ( ७ ) कटुविपाक। ( ८ ) कपोतालय। ( ९ ) शसिच्छत्रम्। ( १० ) स्वर्णपुरकृषीवला। ( ११ ) असूयिनी ( १२ ) वीरभा.। ( १३ ) तुकारामचरितम्। ( १४ ) ज्ञानेश्वरचरितम्। ( १५ ) जयन्तु कुमाउनीया,

लीलाया रूपकाणि साम्प्रतिकशैलीमनुवर्तन्ते। तेषु प्राय. सामयिकसमस्या अधिकृत्य कथावस्तु प्ररोचितमस्ति। नाट्यनिर्देश-रङ्गनिर्देशयो. प्राचुर्यं वर्तते।

### गिरिजायाः प्रतिज्ञा

क्षमारावद्वारा विरचिता गिरिजाया' प्रतिज्ञेति नाम्नी आख्यायिका लीलारावद्वारा रूपकायिता।

पुण्यपत्तनस्य ( पूनाया ) दाविधे पर्वतप्रदेशे गिरिजाभिधाना काचिद् वृद्धा निवसति स्म। तस्या वसति कक्षे स्वपुत्रस्यैक विशाल चित्र कुड्येऽवलम्बितमासीत्। सा कक्ष शोधयन्ती चित्रेण सह वार्तालाप कुर्वाणा कथयति स्म—त्व चिन्ता मा कुरु। अह तव वधस्य प्रतिशोधमवश्य साधयिष्यामीति।

अथैकस्मिन् दिवसे कारागारात् पलायितः कश्चिद् वन्दी

तस्या शरणमाययौ। वृद्धा रज्ज्वा सहायतया त कूपेऽवतारयामास। वन्दिनोऽन्वेषणकर्तारस्तस्या गृहस्य प्रतिकोणमन्विष्यन्ति स्म। तेऽन्धकारावृत कूपमप्यवलोकयामासु । तदा वृद्धया समुदीरितम्—अस्मिन् कूपेऽवतीर्योऽप्यवलोकयन्तु भवन्त । किंतु प्रगाढान्धकारवशात् कोऽपि कूप न प्राविशन्। तत तैस्सह वार्तालापेन वृद्धया ज्ञात यदयमेव मम पुत्रस्य निहन्ता वर्तते, य रक्षितु प्रयतमाना स्मि। वृद्धा त वृत्तान्तमुपश्रुत्य "कथ मम प्रतिज्ञा-प्रतिशोध, पुत्र वधप्रतीकारश्चेति कथयन्ती विललाप।

तस्या विलाप श्रुत्वा रक्षिण प्रोचु—कि स भवत्या विलोकित' ? सोवाच—

जाल्मोऽसौ यदि दृष्ट' स्यादर्पयेय हि त ध्रुवम्।
कदापि नानुकम्प्योऽसौ पापिष्ठ· पुत्रघातक ॥

अथानुसन्धातृषु व्रजत्सु वृद्धोपकूप गत्वा प्रतिशोधज्वालया दह्यमाना जगाद—त्वया मम जातो हत'। अह तत्प्रतिशोध साधयामि। वन्दिनोक्तम् क्षमतां भवती—

शपे मम जनन्या ते भद्रे विश्वस्यता मयि।
दैवयोगान्नतु द्वेषादात्मजस्ते हतो बत॥

मम मातरि दयस्व। अह तस्या एकलः पुत्रः। तच्छ्रुत्वा वृद्धा तं रज्जुसाहाय्येन कूपाद् बहिर्नि सारयामास। स ता प्रणम्य गत.। ततो वृद्धा "क्षमस्व मां पुत्रक! क्षमस्व" इत्यभिधाय चित्रगतायात्मजाय मालां समर्पयाम्बभूव।

## बालविधवा

नाटकेऽस्मिन् पार्वत्यै बालविधवासीत्। अनूप यै स्निह्यति स्म। स तया सह विवाह कामयते। सा पतिगृहे दीना दासीव कार्यमकरोत्। गोशालाया अन्धकारावृते कोणे रात्रि गमयति स्म च।

पार्वती कूपाज्जल गृहीत्वागच्छन्ती मध्येमार्गमनूपेन दृष्टा। तौ सस्नेहं वार्तालाप चक्रतु परस्परमालिङ्गेताञ्च। अथ पार्वत्योक्त—मया बालस्य पत्युर्मुखमपि नावलोकितम्। कालान्तरे पुण्यपत्तने गत्वा विवाहस्य योजना तौ रचयामासतु । तत्र कोऽपि पुरोहितो धर्मलोपभयात् तयो

पुनर्विवाह नाकारयत्। ततोऽनूपो न्यायालये हस्ताक्षरपूर्वक परिणय प्रस्तावयति स्म। किंतु तादृशो विवाह पार्वत्यै नारोचत। अथ पार्वती गृह न्यवतत। सा गृहे भृश भर्त्सिता। त्व मम कुल दूषयसि। नास्ति तव कृते स्थानमत्र। इतो गच्छ। यत्र क्वचित् कूपे निपतेत्यादि प्रत्यादिष्टा।

एकदा निशीथे सा गृहान्निःसृता। तस्या सारमेय तामन्वगच्छत्। अनूपोऽपि घनीभूतेऽन्धकारे तामाह्वयन्ननुससार।

## होलिकोत्सवः

होलिकोत्सवो नामैकाङ्क-रूपक दृश्यत्रयात्मकम्। रूपकेऽस्मिन् होलिकावसरे ग्राम्यश्रमिकपरिवारस्य स्थितेश्चित्रण वर्तते।

कस्मिंश्चिच्छ्रमिकपरिवारे गणुर्नाम श्रमिको राधाभिधानया पत्न्या गोपालनामकेन पुत्रेण च सह न्यवसत्। यद्यप्यय परिवारो दीनोऽवर्तत, परं तु तत्र मानसोल्लासे न्यूनत्व नासीत्। होलिकाया प्रमोदास्पदेऽवसरे राधा पतिमपृष्ट्वा स्वकीय केयूर बन्धकीकृत्य पत्यु पुत्रस्य च कृते नवानि वस्त्राणि क्रीणाति स्म। तत सा गोपाल सुसज्ज विधाय होलिकाप्रमोदे प्रैषयत्। अथ नव-वस्त्रेषु सुसज्ज होलिकोत्सवे प्रवेष्टु पति गच्छन्त सा ब्रवीत्—मदिरागृह न गन्तव्यम्। ततो नृत्यन्तीव राधा गृहकर्मणि व्याप्टताभवत्।

मदिरागृह 'क्लब'—सदृशमासीत्। तत्र पानेन सार्ध द्यूतक्रीडाया अपि व्यवस्थासीत्। तत्र स्वामिना रङ्गुणा गणो पानाय साग्रह मदिरा प्रदत्ता। अथ चाकथयत्—त्व मिथ्यैव स्वपत्नीमात्मनो वशवर्तिनी मन्यसे। पश्य, एष केयूरस्तव पत्न्या मत्कृते समुपायनीकृत.। गणुना पत्न्या केयूरस्य परावर्तनाय स्वकरतलस्थ सर्व धन पणितम्। किंतु स पराजित। तदा तस्य किमपि रिक्थ नासीत्। तेन पुनर्निपीतम्। ततो गृहमागत्य पत्नीमताडयदकथयच्च—केयूरस्त्वया स्वजाराय समर्पित। राधा वृत्तमिद गोपायितुमैच्छत् परन्त्वस्य फल प्रतिकूल सञ्जातम्। ततो गणुस्ता पद्भ्यामताडयत्। मयि कार्यार्थ प्रति गतवति तव जार प्रत्यहमायातीति कथयित्वा स ता व्यभिचारपरायणा मत्वा गृहाद् नि सारयामास।

अथ यदा तयो पुत्रो गोपालो गृहमायातस्तदा तस्योष्णीष दृष्ट्वा स पुत्र पप्रच्छ—कुतोऽयमुष्णीष क्रीत । पुत्रेण निवेदितम्—कुसीदकस्य विपणे रय क्रीत । अह मात्रा सह तत्र गतवानासम् । ततो गणुर्गोपालस्य वासस । कोणे किमपि निबद्धमपश्यत् । तत्रैक पत्रमासीद्, यस्मिन् दश रूप्यकाणि प्रदाय केयूरो बन्धकीकृत इति लिखितमवर्तत । अथ गणु स्वभ्रान्ति ज्ञात्वा 'राधे राधे' इति पुन पुनराहूय रोदिति स्म ।

रूपकेऽस्मिन् श्रमिकपरिवारस्य दुर्दशाया भावुकतापूर्ण वर्णन सस्कृतसाहित्येऽनुपम वर्तते ।

## वृत्तशंसिच्छत्रम्

वृत्तशसिच्छत्रे जामातैको श्वश्रूं प्रत्यासक्तो दर्शित । त्यागी महात्मा ( त्यागी बाबा ) रामा ( रामी ) प्रति स्वविवाह प्रस्तावयति । एव हीद रूपक योरपीया रीतिमनुकरोति ।

रथ्याग्रामपुरोहितस्य विधवाकन्याया इन्दिराया पुत्री अनुपमेन सह विवाहितासीत् । श्वश्रूर्जामाता च तुचरग क्रीडाया निमग्नावास्ताम् । अनुपमस्य चेतसि इन्दिरा प्रत्यासक्ति पद लेभे । इन्दिरायास्तनुजा वयसा द्वादशवर्षीयासीत् । अनुपमः वयसाष्टविशतिवर्षीय, इन्दिरा च षड्विशतिवर्षीयासीत् । अथ प्रस्थानवेलायामनुपम इन्दिरामपि सहैव चलितुमभ्यर्थयत् । इन्दिरया प्रोक्तम्—मीरा मम तनूजा सह वासयोग्या सञ्जाता । त्वया सह मम निवासो नोचित. । तदानुपमेन स्पष्टीकृतम्—अह तु तुभ्यमेव स्निह्यामि । अन्यथावश्यं, म्रिये । तच्छ्रुत्वा श्वश्रूर्जामातर सक्रोधमुवाच—प्रमत्तो मा भव । अमृत परित्यज्य त्व विष प्रति प्रवृत्तोऽसि । ततोऽनुपम श्वश्रूचरणयो स्पृष्ट्वा क्षमामयाचत । अथोद्विग्न स मरणमेव श्रेयो मन्यते स्म । स वनैकदेशे प्रायश्चित्त समारब्धुमियेष ।

कालान्तरे अष्टादशवर्षाणि व्यतीतानि । खढकीनाम्न. स्थानस्य सविधे नदी निकषा श्मश्रुल एक तपस्वी वसति । स बहुसमयपूर्व

रेलयानात् पतितोऽभवत्। ततस्तस्य चेतना प्रणाश गता। पश्चात् पुण्यपत्तनस्य राजकीये चिकित्सालये चिकित्सितः। ततः प्रभृति च फलमूलान्यश्नन् त्यागीबाबेति नाम्ना तत्रैव निवसति स्म कांश्चिच्छात्रानाध्यापयञ्च। कतिपयमासपूर्वं स रामीनाम्नी विधवां नद्या निमज्जन्ती ररक्ष। तत आरभ्य रामी तस्याश्रम आयाति स्म। निकटवर्तिनि विधवाश्रमे सा कर्मचारिण्यासीत्। 'त्यागीबाबा' महोदयस्तामवोचत्—साम्प्रत त्वदायत्त जीवन मे क्षणमपि वियोग न सहते। रामी तमुक्तवती—अह वस्तुतो न विधवा। मम पति क्वचिज्जीवति। शैशव एव पत्युवियुक्ताह तत्प्रवृत्तिं न जानामि। स मया ग्रामे ग्रामेऽन्वेषित। अथ चार्थाभावाद् विधवेव रूप दधाना वास्तविकाभिधान परिवर्त्य कर्मचारिणीरूपेण विधवाश्रमे वसामि। सम्प्रति विधवाश्रमे मासैकस्यावकाशो भविता, अतोऽह स्वग्राम रुय्याभिधान प्रयास्यामि। त्यागिमहात्मनोक्तम्—अत्रैव समाश्रम उष्यताम्। आवा परस्पर विवाहितौ भूत्वात्रैव निवसाव। राम्याभिहितम्—अह प्रागेव विवाहिता, पुनर्विवाहो भवितु नार्हति। अन्ततो गुरुजनानुज्ञया सा विवाहमियेष। तस्या गमनवेलाया त्यागिमहात्मनोक्त—शीघ्रमागम्यता त्वया। त्वा विना कष्ट जीवन मम।

मीराया रुय्याग्राम गतवत्यामेव त्यागिमहात्मापि तत्रैवागत। श्मश्रुलमपि तमिन्दिराभिज्ञातवती। मीरा बहिर्गतासीत्। अनुपमेन ('त्यागी बाबा'-महोदयेन) कथित यत् रेलदुर्घटनाया मस्तकाघातात् पूर्ववृत्त न स्मरामि। तत कष्टे निमग्नोऽहमेकान्ते नदीतटेऽवसम। अथ स प्रतिनिवर्तन जिगमिषति तदेन्दिरया निवेदित—तव पत्नी मीरापि वर्ततेऽत्र। पश्चात् अनुपमो रेलस्थानात् स्वविष्टरादिकमानेतु गत। अथ मीरा समागत्य मातु पुरत पुनर्विवाहस्य चर्चां चकार। इन्दिरा अनुपमस्यागमन मीरायै सहसा निवेद्य तच्चेतो दु:खयितु न समीहते स्म। अत सोक्तवती यत्तव परिणेतु समाचारोऽस्ति प्राप्त। तत स स्वयमेवागतोऽस्तीति तया निवेदितम्। मीरायाश्चेतसि त्यागिमहात्मान प्रत्यासक्ति समुत्पन्नाविद्यत। अतस्तस्याश्चेतो द्विधा भिन्नमभूत्।

भोजनात् पूर्व मीरा द्वारपिधानसमये छत्र दृष्टवती। तच्छत्र त्यागि-

महात्मनो वर्तत इति साभिज्ञातवती। तज्जनन्येन्दिरया प्रोक्तम्—इदमनुपमस्यैव छत्रमास्ते। अस्मिन्नेव समये स तत्र समागत। इन्दिरोवाच—मङ्गल खल्विदं छत्रम्।

## मीराचरितम्

मीराचरित क्षमारावस्य मीरालहरीमुपजीवति। अस्मिन् लीला प्रारम्भे मङ्गलाचरण न्यस्तवती। अत पश्चात् संक्षेपेण प्रस्तावनापि सूत्रधारमुखेनोपन्यस्ता। अन्ते भरतवाक्य नास्ति। भारतीयसांस्कृतिकपरम्परामण्डितेऽस्मिन् रूपके त्रयोदश दृश्यानि विलसन्ति। मीराया जीवनस्य हरिभक्तिपरा सर्वा घटनाश्चित्रिता। प्रस्तुतस्यैकाङ्करूपकस्य भाषा सरला लघुवाक्यमण्डिता चास्ति।

## स्वर्णपुरकृषीवलाः

अस्मिन्नेकाङ्के त्रिषु दृश्येषु स्वर्णपुरकृषकाणा भूकराप्रदानस्य सत्याग्रहस्य, आग्लशासनविहितात्याचारस्य च कथास्ति। रेवानाम्नी विधवा सत्याग्रहस्याग्रणी। त ग्राममग्निना दहति ग्रामशासक। दृष्ट्वैतद्रेवा कथयति—

ज्वालेय जटिला पुण्या दीपिकेति विभाव्यताम्।
नीराज्यते यथास्माभिर्बुद्धिनेता बृहस्पति॥

एवं हि ग्रामस्य सर्वे जना सत्याग्रहिणो भूत्वा कथयन्ति—

महात्मा गान्धिर्जयतु। स्वदेशो भुवनत्रयम्॥

## असूयिनी

दृश्यचतुष्टयसयुतेऽस्मिन्नेकाङ्के रेविकाभिधानाया मृतपुत्राया धीवर्या कथा विलसति। धीवरी स्वपुत्राणा मृत्युनिरोधाय प्रतिवेशिनीशिशोर्बलिमिच्छति। किंतु सा शीघ्रमनुभवति यत्स्वपुत्रजीवनाय परपुत्राणा हनन घोरपाप वर्तते। अथ नेपथ्ये कथितम्—

कालिका यदि सम्प्रीता भवेन्मानवयज्ञत।
न किं हि भावि सन्तान कुर्यात् सा चिरजीविनम्॥

## क्षणिकविभ्रमम्

क्षणिकविभ्रममेकाङ्करूपक वर्तते। सुनीतेः पुत्रो गोविन्द एकवर्षे

यावच्चौर्यापराधे दण्डितः कारागारेऽवसत्। सुनीतेः पती रेलयाने यात्रासमये हत इति मिथ्यासमाचारो रामदासेन सुनीत्यै दत्तः। गोविन्द कारागाराद् यदा गृहमायातस्तदा तेन सार्धं तस्य परमसुहृत् कश्चित् समायात, येन सुनीते सद्व्यवहारो नासीत्। रामदासो गोविन्दमवदत्—यो जनस्त्वया सहानीत स एव तव पिता। अयं निर्दोष सन्नपि विंशतिवर्षं यावत् कारागार दण्डित. सन्नध्युवास।

सुनीतेर्दुर्व्यवहारात् खिन्नो गोविन्दस्य पिता गृह त्यक्त्वा क्वचिद् गतवान्। एष एव क्षणिकविभ्रम।

## गणेशचतुर्थी

गणेशचतुर्थ्याश्चन्द्रदर्शन ग्रामवासिने हरयेऽनिष्ट जनयति। तस्य गृहे भोक्तु किमपि नासीत्। स तदर्जनाय रात्रौ क्वचिद् गच्छन् निर्दोषः सन्नपि चौर्यापराधे निबद्ध। अनन्तर प्रमाणाभावान्मुक्त।

## मिथ्याग्रहणम्

मिथ्याग्रहणनाम्नि दृश्यद्वयात्मक एकाके मुहम्मदमहोदयस्य बहुपत्नीत्वस्य चर्चास्ति। असकृत् स स्वपत्न्या सख्याः सरलाया गृहं गच्छति। एतस्मादमीना क्षुभिता वर्तते। परन्तु स महोदय सरलया सह निवसन्तीं स्वकीया द्वितीया पत्नीं मिलितु यातीति ज्ञानममीना पश्चाल्लेभे।

## कटुविपाकः

कटुविपाक नाटक क्षमाया "ग्रामज्योति" इति रचनां रूपकायते। ग्रामीणा युवती रेवा सत्याग्रहान्दोलने प्राणान् परित्यजति। तस्या पिता राजपुरुष आसीत्। स अन्तत एतदनुभवति यन्मम सर्वे सम्बन्धिन सत्याग्रहिण. सवृत्ता।

## कपोतालयः

कपोतालयप्रहसन हिन्दी-लेखकस्य जगदीशचन्द्रमाथुरस्याख्यायिकामुपजीवति। विभवसम्पन्नेन तेन कथानायकेन स्वनिखिलसम्पत्ते. संरक्षण (बीमा) कारितम्। तस्य गृहे चौरा. सम्पत्तिमचोरयन्, परन्तु संरक्षण-(बीमा) वशात् स हानि नान्वभवत्।

## वीरभाः

वीरभानामैकाङ्कस्य नायिका वीरभा अस्ति। सा युवावस्थाया सर्वस्व परित्यज्य तपस्विचर्यामङ्गीकृत्य राष्ट्रस्य स्वतन्त्रतायै सत्याग्रहान्दोलनस्याग्रणीर्भवति।

## तुकारामचरितम्

क्षमायास्तुकारामचरितमेवास्मिन् रूपकायितम्। नाटकेऽस्मिन्नाद्यन्त पद्यात्मका सवादा विलसन्ति। प्रस्तुतनाटक एकादशाङ्का सन्ति।

## ज्ञानेश्वरचरितम्

ज्ञानेश्वरचरित नाटक चतुर्दशदृश्येषुसम्पन्न विद्यते। अस्मिन् महात्मनो ज्ञानेश्वरस्य समग्र जीवनगाथा विलसति।

## जयन्तु कुमाउनीयाः

इय नाट्यकृतिर्लीलाया परवर्ति-रचनास्वग्रगण्या विद्यते। हिमालये सम्भूतस्य चीन-भारतयो॰ सङ्ग्रामस्य कथास्मिन्नाटके वर्तते। दूरतो गुलिकानाद श्रूयते। कुमाउसैनिका गायन्तो वादयन्तो मानसिकखिन्नता दूरयन्ति। सैनिकजीवनस्य चक्षुर्भ्यामवलोकित वर्णनमस्मिन् नाटके वर्तते।

कुमाउनीसेनाया सेनापतिर्हरीश्वरोऽभूत्। तस्मिन् सेनाया अगाधो विश्वास आसीत्। सेनाया समक्ष बहुविध वैषम्यमासीत्। बहवो वीरास्तत्र रोगग्रसिता बभूवु। ऊर्णवस्त्राणा ऊनत्वेन शैत्य बाधते स्म भृशम्। अस्त्र-शस्त्राण्यपि पुराणान्यपर्याप्तानि चासन्। शत्रो॰ पार्श्वे आधुनिकान्यायुधान्यवर्तन्त।

नोर्बुनामा सिक्किमप्रदेशस्य गुप्तचरो नीलाङ्गलशिखरमधिरुह्य सङ्कटबाहुल्यमतिक्रामन् चीनानां गुल्मं प्रविश्य तेषा योजना ज्ञात्वा समागच्छत्।

नीलाङ्गल विजेतु हरीश्वरस्य नेतृत्वे सेना तच्छिखरमधिरुरोह। 'कर्नल' शिखर॰ सहवर्ती आसीत। नीलाङ्गलशिखरे भारतस्य राष्ट्रियध्वज उल्लासित॰। पराक्रमेऽस्मिन्ननेके वीरा दिवङ्गता।

तता विदेशमन्त्री वर्मा तत्र गत्वाघोषयत्—इद क्षेत्रम् अमेरिकादि-देशानां शासकाना मत समादृत्य विमोक्तव्य भवद्भि' ।

दृश्यत्रयात्मकेऽस्मिन् नाटके "वेड्डूपाको बारामासा" "छानी विलोरी" इत्यादीन्यनेकानि गीतानि वर्तन्ते ।

## तुलाचलाधिरोहणम्

नेपालदेशे घोरपाटनग्रामस्य समीपे तुलाचलस्योपत्यका सन्ति । अत्र निर्झराणा गीतमनिश श्रूयते । कश्चन पथिक पोटलिका गृहीत्वा गच्छन्नासीत् । उपरिष्टाद् वायुयानस्य घर्घरनिनादोऽश्रूयत । वायुयान दुर्घटनाग्रस्त भवतिस्म ।

तुलाचल पान्थमपृच्छत्—अपि मा जेतु समागतोऽसि ? पथिकेनोक्तम्—अह तु भवतो दर्शनार्थमागतोऽस्मि । तुलाचलोऽपृच्छत्—तर्हि कीदृगिद वायुयानम् ? पथिकेनोक्तम्—मुम्बय्या यानमेतच्चालकस्य भ्रान्त्येह समायातम् । विमानस्य सञ्चालक तुलाचल प्रणनाम । एको राजदूत आयात । स तुलाचल प्रति श्रद्धामभिव्यक्तवान् । अमेरिकाया द्वौ नागरिकावागतौ । ताभ्या तुलाचलो भयङ्कर प्रतिभातः । ललनैका सूदूरादागत्य शीतलोऽय महान् प्रदेश इत्यवोचत् ।

पश्चात् वायुयानस्य दुर्घटनाया कारणानि ज्ञातु विशेषज्ञा आयाता ।

## मायाजालम्

क्षमारावद्वारा विलिखिताया आख्यायिकाया सम्यक् रूपायण प्रस्तुत मायाजाल नाम । अस्या कृतौ संवादाधिक्य वर्तते । रङ्गमञ्चोपरि कार्यस्य ( Action ) अभावोऽस्ति ।

मायाजाले चतस्र' कन्या धूर्ताना कारणाज्जीवनस्य शुचिताया वञ्चिता भवन्ति । मुग्धाभिधानाया कन्याया पिता स्वजामात्रे पेरिसदेशेऽध्ययनस्य व्यवस्था सयोजयामास । परतु स पेरिसे स्वां पत्नीं मुग्धा तत्याज । मन्दाया॰ परिणय केनचिद् अज्ञातपुरुषेण सह सम्पन्नः । स प्रथमं तु ता अत्यधिक समाद्रियते स्म । अथ पुत्रे समुत्पन्ने स पत्नी

विसस्मार। श्रेष्ठिकन्या मोहिनीमपि तस्या पति पेरिसे नीत्वा कालान्तरे ता परित्यक्तवान्। दया वेश्यायाः कन्यासीत्। सा मातर त्यक्त्वा ब्राह्मणस्यैकस्य गृहमध्युवास। प्रयत्नशतैरपि तत्र तस्या विवाहो न सम्पन्न । सा समुद्रतटे मूर्छित तरुणामेक ररक्ष। सोऽपि ता नोवाह।

प्रस्तुतरूपक १९७२ ईसवीयवत्सरे विश्वसस्कृते प्रकाशितम्।



## विश्वेश्वरविद्याभूषणस्य नाट्यसाहित्यम्

विद्याभूषणकाव्यतीर्थश्चट्टलनगरीमधिवसति वङ्गदेशे। अस्य पिता विश्वेश्वर महामहाध्यापक 'कृतिरत्नम्' आसीत्, माता च कुसुमकामिनीदेवी। अस्य कुलगुरु श्रीमन्महेशचन्द्रो भट्टाचार्य आसीत्।

विश्वेश्वर प्रथम स्वपितुरधीतवान्। तत "चट्टलसस्कृतमहाविद्यालये" समभ्यैष्ट। तत्र शास्त्राचार्य रजनीकान्तादयस्तस्य गुरव आसन्। तत कलकत्ता सस्कृतमहाविद्यालये तस्य राजेन्द्रनाथविद्याभूषणादयोऽध्यापका अवर्तन्त।

विश्वेश्वर पश्चिमवगशिक्षाधिकारसेवातः प्राध्यापकपदाद् विश्रान्त। तस्याध्यापनकर्म चट्टलसस्कृतमहाविद्यालये प्रमुखरूपेणासीत्। असौ नितान्तविनयशीलो वर्तते। तेन खलु स्वरचितनाटकेषु निवदेकरूपेण दीनग्रन्थकार इति विशेषित। विश्रान्त सन् साम्प्रतमय हुग्लीमधिवसति। अद्यापि तल्लेखिन्या कृतीना सर्जनमजस्र सम्पद्यते। तेन वाल्मीकिसवर्धने नाटके स्वरचितग्रन्थाना नामानि लिखितानि तद्यथा—

### रूपकाणि

(१) दस्युरत्नाकरम्। (२) भरतमेलनम्। (३) वाल्मीकिसवर्धनम्। (४) चाणक्यविजयम्। (५) प्रबुद्धहिमाचलम्। (६) विष्णुमाया। (७) राजर्षिभरतः। (८) उमा-तपस्विनी। (९) द्वारावती। (१०) ओङ्कारनाथमङ्गलम्। (११) मातृपूजनम्। (१२) उत्तरकुरुक्षेत्रम्। (१३) राजर्षिसुरथ। (१४) काशीकोशलेश। (१५) अरुणाचलकेतनम्।

मञ्जूषापत्रिकानुसारमेतेषु रूपकेषु दस्युरत्नाकरस्य भरतमेलनस्य च ध्यानेशनारायण सहलेखको बभूव।

### खण्डकाव्यम्

(१) काव्यकुसुमाञ्जलिः (२) गङ्गासुरतरङ्गिणी च।

**कथा**

मणिमालिका

**गीतिकाव्यम्**

वनवेणु

एतदतिरिक्तं विश्वेश्वरेण बगभाषाया पद्मपुर'—'पुष्पपराग' इति कृतिद्वय प्रणीतम् ।

कवेर्गृहमेव विद्यालय आसीत्, यत्र तस्य पिता कुलपरम्परया रामायण, महाभारत पुराणानि, महाकाव्यानि च पाठयति स्म । तस्य पिता सङ्गीतस्य नाट्यस्य च रसज्ञ आसीत् । तत्रैव स निकटवर्तिनि शिवमन्दिरप्राङ्गणे मध्याह्नानन्तर पल्लीनाट्यगोष्ठ्यामभिनयप्रस्तुतौ प्रोत्साहको भवति स्म ।

चट्टलमहाविद्यालयेऽध्यापक' सन् विश्वेश्वर सर्वप्रथम कृष्णार्जुन-नाटकाभिनये कृष्णस्य भूमिका निरवहत् । अनन्तर बग-सस्कृतभाषयो-रनेकेषु रूपकेषु अभिनिनाय । अनेकसस्थाभिस्तस्य रूपकाण्यभिनीतानि । कलिकाताया आकाशवाण्या तस्य कृतीना सक्षिप्तसस्करणानि प्रसारितानि अर्थाभावात् तस्यानेकनाटकान्यप्रकाशितानीति कवे खेद ।

**चाणक्यविजयम्**

चाणक्य विजये चन्द्रगुप्तस्यपितृव्यपुत्रो नन्दस्त प्रति संशयाकुलो भृश पीडयति स्म । तदानीं चाणक्य पाटलिपुत्रमधिवसति स्म । नन्दस्य प्रजापालनप्रवृत्तौ हीनतामवलोक्य चाणक्य खिन्न आसीत् । एकदा ज्योतिर्विदो वेषेण स चन्द्रगुप्तममिलत्, तव हस्तरेखानुसार त्वया राजपद भोक्तव्यमिति न्यवेदयच्च । श्रुत्वैतच्चन्द्रगुप्तस्य निराशा विगलिता ।

द्वितीयेऽङ्के नन्दश्चन्द्रगुप्तमभियुक्ते यत्त्व राजद्रोही वर्तसे, मद्विरुद्धमाचरसि चेति । चन्द्रगुप्तेन कथितम्–राजपुत्रत्वादह स्वकीय भाग प्राप्तुमिच्छामि । नन्देनोक्त—त्व दासीपुत्रोऽसि । अतस्तव कुतो भाग ? अथ पार्षदैश्चन्द्रगुप्तो दोषभागिति समर्थित दण्डनीयश्च घोषित । तस्य माता मुरागत्य पुत्ररक्षायै याचते स्म । परन्तु नन्दादेशाद् द्वावपि निगडितौ कारागारे प्रवेशितौ ।

एकस्मिन् दिने रक्षिषु सुप्तेषु मुरा चन्द्रगुप्तममिलत्। तस्मिन्नेव समये चाणक्यस्य बालिका शिष्या गुप्तमार्गेण कारागृहं प्रविष्टा, तौ द्वावपि कारागृहाद् बहिस्तेनैव गुप्तमार्गेणानयच्च।

तृतीयेऽङ्के वनस्थली दर्भरहिता कुर्वाणेन चाणक्येन चन्द्रगुप्तो विज्ञापितो यत्। कुशैश्चरणस्य क्षते पितृश्राद्धे बाधा समुत्पन्ना। अत एव ममेदृश समारम्भ। तदनु वार्तालापे चन्द्रगुप्तेन कथितम्—अहं हृतराज्य प्राप्तुमिच्छामि। चाणक्येन तस्य साहाय्य कर्तुं प्रतिज्ञातम्। एकदा नन्द पितृश्राद्ध चिकीर्षति स्म। श्राद्धे ब्राह्मणा भोजयितव्या आसन्। आमन्त्रितश्चाणक्योऽपि तत्र गत। नन्देनावमानित स प्रतिज्ञातवान्–

मोचयामि शिखा चेमा ज्वलन्ती ब्रह्मतेजसा।
सवशे त्वयि सनष्टे ग्रन्थिष्यामि पुनश्च ताम्॥

चतुर्थेऽङ्के चन्द्रगुप्त पल्लीगृहे सस्थित. कुसुमपुरमभिषेणयितुमुपक्रमते। बालिका शिष्या परिव्राजकरूपमास्थाय चन्द्रगुप्त मिलित्वा तस्मै आक्रमणयोजनाया पत्र प्रायच्छत्। चन्द्रगुप्तस्य सैनिका नवायुधैः सज्जा आसन्। पूर्णिमाया रात्रो चन्द्रगुप्तेनाक्रमिष्यता चाणक्यो द्रष्टव्य आसीत्, यदा नागरिका उत्सवे प्रमत्ता भवेयु।

पञ्चमेऽङ्के कौमुदीमहोत्सवे राजा, राज्ञी तयो· परिचारका· सुहृदश्च हर्षनिमग्ना भवन्ति। राज्ञी वीणा वादयित्वा राजानं हर्षयति। विदूषको राज्ञीं परितो नृत्यति।

चन्द्रगुप्त' सेनासमेत समागत्य चाणक्याय स्वागताशसन। सादर व्याजहार। अथ परिव्राजिकावेषधारिणी शिष्या समागत्य न्यवेदयत्—नगरप्रवेशमार्गो राजभवनस्य गुप्तमार्गश्च मया ज्ञातौ। मया नन्दस्य सैन्यबलस्यापि निखिला सूचना समधिगता। चाणक्यस्या देशानुसार कुसुमपुरमाक्रान्तम्। स नीलकञ्चुक दधार। चन्द्रगुप्तो विजयते स्म। तस्मै राजनीतिश्चाणक्येनोपदिष्टा।

सप्तमाङ्के चाणक्यो नन्दस्य मन्त्रिण गुणसिन्धु चाणक्यवशावर्तिन करोति। अन्ते चन्द्रगुप्तश्चाणक्यचरणयो' स्वमुकुट न्यस्यति। चाणक्य' स्वशिखा बध्नाति। ततस्तपसे वन गच्छति। यथा—

धर्मराज्य प्रतिष्ठाप्य भारते श्रीगुणान्वितम्।
पूर्णव्रतोऽस्मि सानन्द यास्यामि तपसे वनम्॥

चाणक्य' शिष्या बालिकामुपदिदेश—"खण्डच्छिन्नविक्षिप्त भारतवर्षमैक्यं प्रापय।"

अस्मिन्नाटके सङ्गीतेन, वीणावादनेन च दर्शका सविशेषमानन्दमाप्नुवन्ति। चाणक्यद्वारा ज्योतिर्विदो रूपस्याङ्गीकरणेन बालिकया परिव्राजिकारूपधारणेन च छायातत्त्वमुपलभ्यते।

अस्य प्रकाशन रूपकमञ्जरीग्रन्थमालाया प्रथमे भागे १९६७ ईसवीये कलिकातया सम्पन्नम्।

## वाल्मीकि-संवर्धनम्

ब्रह्म-नारदौ पर्यटन्तौ विपिने दस्युराजस्य रत्नाकरस्यानुचरैर्दृष्टौ। अथ संकेतपूर्वक दस्यवस्तयोर्मार्गमुपरुद्धवन्त। ताभ्या स्व-स्वविषयेऽतिदीनता प्रदर्शिता, परन्तु दस्युराजादेशाद्दस्यवस्तयोरविवसनमन्वेषण समारब्धम्।

अथ ब्रह्मा दस्युराजमपृच्छत्—अपि तवास्मिन् पापकर्मणि कोऽपि समभागी? दस्युराजरत्नाकरोऽस्योत्तर प्रष्टु तौ निबध्य गृहं गतवान्। तस्य पितरौ तस्य पापप्रवृत्ते प्रथमत एव समुद्विग्नावास्ताम्। अथ रत्नाकरेण पृष्टौ पापकर्तैव पापभाग् भवतीत्यूचतु। भार्यापि तादृगेवोत्तर दत्तवती।

पापकर्मणो भृशमुद्विग्नो दस्युराजो ब्रह्मनारदयो' शरण स्वात्मशुद्धये गत.। चतुराननोऽब्रवीत् जय श्रीराम श्रीरामेति जप। कालान्तरेण रत्नाकरस्तत्रैव समाधिमधिगतवान्।

अथ बहुकालानन्तर ब्रह्मनारदौ पुनस्तत्र समागतौ। रत्नाकरस्य हस्तौ स्पृष्ट्वा ब्रह्मादिदेश—

"उत्तिष्ठ ब्रह्मन्! परिहर योगसमाधि जगता कल्याणाय।"

ततो निषादेन निहत क्रौञ्च परितस्तद्भार्याया करुणक्रन्दन श्रुत्वा वाल्मीकिमुखान्नि सृतम्—

मा निषाद प्रतिष्ठां त्वमगम शाश्वती समा।
यत्क्रौञ्चमिथुनादेकमवधी काममोहितम्॥

अन्ततो निषाद आगत्य वाल्मीकिं क्षमामयाचत । वाल्मीकि स्वशापेन चिखेद । तदानीमेव सरस्वती महर्षिमब्रवीत्—

"मच्छन्दादेव ते कण्ठान्निर्गतेयं सरस्वती ।" ब्रह्मणोक्तम्—अनेन निषादप्रसङ्गेन वाग्देवी त्वां रामायणं लिखितुं प्रेरयति । ततः सरस्वती रामकथागानाय नारदं समादिदेश ।

अस्य प्रकाशनं कलिकाताया रूपकमञ्जरी-ग्रन्थमालायामभवत् । अस्याभिनयोऽनेकैः प्रतिष्ठानैः कृतः । अस्य प्रसारणमाकाशवाण्यापि विहितम् ।

## प्रबुद्धहिमाचलम्

गन्धर्वराजकन्यया मधुच्छन्दया भवानी शङ्करौ समर्चितौ । तस्याः पितरावपि तौ पूजितवन्तौ । पश्चाद् विजयकेतुरभिषिक्तः । देवस्थानस्य नवीनो नरपतिः सर्वैरभिनन्दितः । समेषां कृते राज्यगौरवाय जयपताका-सम्मानो निहितः । सेनाध्यक्षेण प्रतिज्ञातं यदहं देवस्थानगौरमवरुणाचलदुर्गञ्च रक्षिष्यामि ।

विशालपुरस्य राष्ट्रपालो विक्रमवर्धन आदिदेश—अद्यावधि सर्वे मठाः, मन्दिराणि तथा तेषां सम्पत्तयो राज्याधिकारे भविष्यन्ति । तत्र निवासिनो जनाः कृषिं कुर्वन्तु शिल्पाजीवा वा भवन्तु । सर्वे श्राम्यन्तु । अपर आदेश आसीत्–समग्रा भूमी राष्ट्रायत्ता भविष्यति । सर्वे जनाः स्वां जीविकां कृषिशिल्पादिभिः सम्पादयन्तु इति ।

द्वितीयेऽङ्के विशालपुरस्य राज्यप्रासादे राष्ट्रपतिर्विक्रमवर्धनो मन्त्रणां करोति स्म । तन्मतमासीत्—अस्माकं राष्ट्रस्याभ्युदयस्तु निष्पन्नः । किंतु प्रतिवेशिनो राज्यस्य देवस्थानस्य श्रीरस्माकं नेत्रयोः पीडां जनयति । कथं नास्माभिः स्वराष्ट्रस्य वर्धमानायै जनसंख्यायै देवगिरेस्तटवर्ती प्रदेशः स्वायत्तीक्रियते ? मन्त्रिभिरनुमोदितं राष्ट्रपतिमतम् । ततश्चण्डशासनो नाम सेनाध्यक्षो देवस्थानमाक्रमितुं सैन्यं सज्जयते स्म ।

तदानीमेव मदन्तिका तृष्णामोहमयी-वह्निशिखाप्रभृतिभिः सखीभिरागत्य विक्रमवर्धनं स्वगीतेनानन्दयन्ति स्म ।

तृतीयाङ्के गन्धर्वनगरस्य नैसर्गिकसुषुमामण्डिते प्रान्ते मृगयाप-

रायणो विजयकेतुरायात । तस्य सखाय परिचारकाश्च पश्चाद् वियुक्ता आसन् । स तत्र पान्थवेषधारिण दस्युमपश्यत् । दस्युनिर्दिष्टमार्गेण गत्वा स मधुच्छन्दादि-गन्धर्वकुमारीरपहरन्त दस्युराजमपश्यत् । विजयकेतुस्तेषामुपरि बाणानवर्षयत् । तद् दृष्ट्वा ते पलायिता । ता सर्वा गन्धर्वकन्या विजयकेतुर्गन्धर्वराजस्य चित्रभानो सविधे प्रापयामास । पारितोषिकरूपेण गन्धर्वराज स्वा दुहितर मधुच्छन्दा विजयकेतवे प्रदत्तवान् ।

चतुर्थाङ्के राजकवि सुधाकण्ठो देवस्थानस्य राजमार्गेषु वीणा वादयन् कथयति स्म । विविधसास्कृतिकप्रवृत्तिनायका स्वा स्वा विचार-सरणि समर्थयन्तो राष्ट्रियजीवनादर्शान् प्रस्तावयन्ति ।

पञ्चमाङ्के सूच्यते यद् विशालपुरसैनिकैररुणाञ्चलप्रान्तप्रदेशोऽभिषेणित । सिन्धुकूटाधिपतिरपि शत्रुणा सहैति सेनापतिना पुरञ्जयेन समाचार प्रेषितो यच्छत्रु पराजित । देवस्थानस्य सर्वे जना राष्ट्ररक्षायै समुद्यता आसन् । राष्ट्रकन्या नवयुवकानामुत्साहवर्धनाय राष्ट्रगीतमगायन् ।

पूर्वकूटप्रदेशस्य शरणार्थिनो देवस्थान प्रविष्टा । तेषा निवास-सुव्यवस्थित । सनातनो रत्नमञ्जरी चास्या दिशि महत् कृतवन्तौ । रत्नमञ्जर्या प्रार्थनागान श्रुत्वा विजयकेतु समादिशत्—

"उन्मोचय मम नगरद्वारमनाथेभ्य आश्रयदानाय । अद्य प्रभृति राजभवन शरणार्थिभ्य स्थानदानाय सदोन्मुक्तं तिष्ठतु । राज्ञी मधुच्छन्दापि शरणार्थिव्यवस्थाथा पूर्णसहायपरा बभूव । राजकविना सुधा कण्ठेन लोकजागरणाय गीतानि विरचितानि ।

षष्ठाङ्के ब्रह्मानन्द सनातन निवेदयति स्म—देवा अधुना योग-निद्रामाश्रयन्ते । देवतात्मा हिमाचलोऽपि समाधिलीनो निद्राति

पश्यैना दिव्यालोकसमुद्भासितदिङ्मण्डला देवीनूतिम् । चिन्मयीविश्वधात्री विश्वरूपा परमेश्वरीय भक्तजनैश्चिरमाराध्यते । सनातन स्थिरयोगासन सन् योगविधिना महासमाधिमङ्गीचकार ।

प्रबुद्धहिमाचल नाटकमतिशयमुत्तरीय वर्तते । अत्र भारतीया. सनातनवैभवोत्कर्ष शिक्षिता ।

उमामहेश्वरस्य यात्राप्रसङ्गे नाटकमिदमभिनीतम् । आकाशवाण्यापीदं प्रसारितम् ।

### शिल्पम्

नाटकेऽस्मिन् यद्यप्याङ्गिककार्याणा विपुलता नास्ति, तथापि वैचारिककार्यसिद्धि प्रचुरमात्रायां विलसति ।

## उत्तरकुरुक्षेत्रम्

प्रस्तुतनाटके कौरवपाण्डवकृष्णाना महाभारतयुद्धानन्तरदु स्थितेश्चित्रणमस्ति ।

कुरुक्षेत्रयुद्धे सर्वसम्बन्धिषु निहतेषु फाल्गुनो दु खनिमग्नोऽभवत् । कृष्ण इद धर्मयुद्ध क्षत्रियाणा श्रेयसे मनुते स्म । युधिष्ठिरेण कथितम्—अह राज्य परीक्षिते दत्त्वा वानप्रस्थ ग्रहीतुमिच्छामि । कृष्णेनाभिहित—यादवानामाह्वानादह द्वारका जिगमिषामि । धर्मो युष्मान् रक्षत्विति कथयित्वा स द्वारका प्रातिष्ठत ।

पुत्रशतस्य मृत्योर्धृतराष्ट्रो हस्तिनापुरप्रासादे विषण्णोऽवर्तत । गान्धारी-युधिष्ठिरादयस्तममिलन् । युधिष्ठिरस्तपसे वन प्रति स्वां जिगमिषा न्यवेदयत् ।

कुन्त्या द्रौपदी समभिहिता—अहं वानप्रस्थग्रहणात् पूर्वमद्य गार्हस्थ्यभार तुभ्यं समर्पयामि । गान्धारी कुन्ती ततो न्यवारयत् । कुन्त्योक्त—सम्प्रति भवत्या सार्धं श्रेय साधयिष्यामि ।

द्वारकाया कृष्णो रुक्मिणीं सत्यभामाञ्चाब्रवीत्—अहं प्रभासक्षेत्रं गन्तुमिच्छामि । मद्वश्या इमेऽधर्माचरणात् परस्परकलहपूर्वक विनष्टा भविष्यन्ति । अहमपि स्वकीया नरलीला समापयिष्यामि ।

नारद आगतः । तस्यातिथ्य रुक्मिणी सत्यभामे कृतवत्यौ । ततो निर्गत्य नारदो मदिरापानात् प्रमत्त नारीवेशधर साम्ब ददर्श । नारदः साम्बपार्श्वगतैर्यादवै पृष्ट—इय स्त्री पुत्र सविष्यते उताहो कन्याम् ? नारदस्तेषामसाम्प्रतमाचरणं वीक्ष्योवाच—एको मुसल उत्पत्स्यते येन युष्माक सर्वेषा यादवाना नाशो भविता ।

अर्जुनो यदा द्वारकामायातस्तदा दारुकस्तमब्रवीत्—भगवता भवान्

मृतयादवानामन्त्येष्टिसंस्काराय समादिष्ट । अवशिष्टानां नारीणां बालकानाञ्च योग्यस्थाने निवेशनायापि भवानादिष्ट ।

अथ द्वारकामागत्य दारुक युधिष्ठिरमवोचत्—कृष्णेनेहलोकलीला संवृता । द्वारकाया यादवा विनष्टा. । इद सर्व गान्धार्या शापात् संवृत्तम् । अर्जुनेन निवेदितम्—मार्गे यादवमहिला दस्युभिर्लुण्टिता: । शेषा गृहीत्वाहमायात. । ततो युधिष्ठिरो यादवाना कृते उदकदानब्राह्मण-भोजनादिसुकृत कारयित्वा वन जिगमिषु परीक्षित राज्येऽभिषिक्तवान् ।

पञ्चमाङ्के परीक्षित् मृगयार्थमटन् वनलक्ष्मी ददर्श । सा त तस्मिन् वने मृगयातो निवारयामास । ततोऽनुचरानन्विष्यन् स शमीकस्य कण्ठे मृतसर्प प्रक्षेप्य तत्पुत्रेण शप्त सप्ताहाभ्यन्तरे सर्पदष्ट सन् मृत्यु-शापमर्जितवान् । अथ परीक्षिद् गङ्गातटे शुकदेवश्रावितां भागवतकथां शुश्राव । सप्तमेऽह्नि कश्चन ब्राह्मण पुष्पफलादिपरिपूर्ण भाजन दधान. तत्सर्व वस्तु राज्ञे समुपायनीकृतवान् । तस्मात् पुष्पभाजना-न्निष्क्रम्य सर्प परीक्षित दष्टवान् । स दिवगत ।

जनमेजयो नागयज्ञ समनुष्ठितवान् । आस्तीकवचनाज् जनमेजय तस्माद् घोरकर्मणो विरमति स्म ।

प्रस्तुतनाटकस्याभिनये मधुपूर्णिमामहोत्सवे सम्पन्न । अस्य प्रकाशन संस्कृतसाहित्यपत्रिकाया ५० तमे वर्षे अर्वेष्वङ्केपु तथा ५१ तम वर्षस्य प्रथमभागे संवृत्तम् ।

## भरतमेलनम्

भरतस्य चारित्रिकादर्श प्रतिष्ठापयितु कविरिद नाटक प्रणीतवान् ।

रामवनवासादतिसतप्तो भरतो रामस्य प्रत्यावर्तनाय प्रातिष्ठत । शृङ्गवेरपुरसमीपे रामस्य सुहृन्निषादराज ससैन्य भरतमायान्त दृष्ट्वा तमाक्रमिण मत्वा रक्षा सेना सज्जीकृत्याब्रवीत्—

एषा मे शोणितास्वादलोलुपा मर्मघातिनी ।
नृत्यतु समरोल्लासाच्छल्यकी शितधारिणी ॥

अथ स जटाधारिण भरत दृष्ट्वा ब्रूते स्म—अय तु कश्चित् परिव्राजक । भरतस्तमुक्तवान्—दीनोऽह राम द्रष्टुमिच्छामि । गुहराज-स्तस्मै रामस्य पर्णशय्यामदर्शयत् । तद् दृष्ट्वा भरतो रुरोद—

क्व बत स्वर्णपर्यङ्के कोमला पुष्पशय्या ।
क्व चेह रामभद्रस्य वृक्षमूलाधिवास ॥

अथ सीतामुद्दिश्य सोऽब्रवीत्—

यूथभ्रष्टा मृगी कान्ता चरत्येका यथा वने ।
नि सहाया तथार्या मे संश्रितेद शिलातलम् ॥

पञ्चमाङ्के भरद्वाजाश्रमच्छात्रा भरतागमनादनध्यायेन प्रसन्ना दृश्यन्ते। षष्ठेऽङ्के भरतश्चित्रकूटाश्रमे रामममिलत्। भरतेनोक्तम्—मम मात्रा भवान् वन प्रतिष्ठाप्य पापमाचरितम्। रामेणाभिहितम्—मम माननीयाया जनन्या कृते नैवं वक्तव्यम्। तदानीमेव कैकेयी रामसमीपमागत्य तमब्रवीत्—अह भवन्त वन प्रतिष्ठा कलङ्कभागिन्यस्मि भरत उवाच—वय भवन्त विना कथं जीविष्याम. ? भवान् स्व राज्य गृह्णातु। रामेणोक्तम्—पितुराज्ञाया विपरीतमाचरणमसाम्प्रत वर्तते। अस्माभिस्तथानुष्ठिते जनक स्वर्गभ्रष्टो भविष्यति। कैकेय्यापि रामस्य अयोध्यां प्रति प्रतिनिवर्तन वार वार समर्थितम्। रामस्तथा-कर्तुमसमर्थतां प्रकटयामास स। भरतमकथयत्—'स्वीकृत्य राजभार पाल्यता प्रजागण।" अन्ते भरतेनोक्तम्—तर्हि स्वपादस्पर्शपरिपूत दीयता मे पादुकायुगलम्। तदेव रत्नसिंहासने स्थापयित्वा भक्त. प्रतिनिधि सन् राज्यभार वक्ष्यामि। रामस्तस्मै पादुकायुगल समर्पयन्नुवाच—

हे वीर धन्योऽसि गुणैर्वरेण्यैरुदारचेता रघुवंशदीप ।
त्वत्कीर्तिमाल्य विमल वहन्ती जाता सुधन्या वसुधा प्रकामम् ॥

अथ स भरतमशिक्षयत्—माता कैकेयी सदा समादरणीया न। भरतेनोक्तम्—

चतुर्दशैव वर्षाणि यापयामि प्रतीक्षया ।
अन्ते चेत्त्वा न पश्येय प्रवेक्ष्यामि हुताशनम् ॥

अथ भरत सर्वै सहायोध्या प्रत्यागच्छत्।

अस्य प्रकाशन मञ्जूषाया १२ तमे वर्षे सवृत्तम्।



## यतीन्द्रविमलचतुर्धुरीणस्य नाट्यसाहित्यम्

यतीन्द्रोऽधुनाबाङ्ग्लादेशस्थकधुखिलग्रामे १६०८ ई० वर्षे जनिमाप। तस्य पिता रसिकचन्द्रचतुर्धुरीण प्राथमिकशालायां शिक्षक' सन्नपि समाजे समादृत , जनैश्च गुरुरिति व्यपदिष्ट । अयं महाभाग सर्वस्व दत्त्वापि कलिकाताया लन्दने च यतीन्द्रस्य उच्चशिक्षाव्ययमुवाह। यतीन्द्र स्वयमपि छात्रजीवने अर्थार्जनमकरोत् । पितु' प्रेरणया संस्कृताय सविशेषमस्य रुचिर्वर्धतेस्म। १६२६ तमे ई० वर्ष स वैदिककर्मकाण्डेषु नारीति विषयमाश्रित्य शोधोपाधये लन्दनविश्वविद्यालय प्रविष्ट., १६३४ तमेऽब्दे चाभिलषितमुपाधिमधिगतवान्। १६३७ ई० वर्ष यावदय इण्डिया आफिस-पुस्तकालये तथाच लन्दनविश्वविद्यालये कार्यरतः। तत्रैव दर्शनविषये शोधोपाधि प्राप्तवती रमा तेन सगता, परिणीता च। भारतं प्रत्यागतो यतीन्द्रो वगीय-सस्कृत-परिषदो मन्त्रित्वेन, सस्कृतमहाविद्यालयप्राचार्यत्वेन, प्रेसिडेंसीमहाविद्यालये विभागाध्यक्ष-त्वेन च सस्कृतविद्याया उन्नयने भृश प्रायतत। १६४३ तमे वर्षेऽय प्राच्यवाणीति संस्थां स्थापयाञ्चकार। ततश्च प्राच्यवाणीति त्रैमासिकी शोधपत्रिका प्रकाशयामास, यत्र सस्कृतग्रन्था' सानुवाद प्रकाशिता ।

प्राच्यवाण्यां वेद-दर्शन-साहित्य स्मृति-तन्त्रादीनामुच्चशिक्षा दीयते। यतीन्द्र स्वयमपि अध्यापयामास। अस्या सस्थाया' कार्याणि विपुलानि आसन्। डॉ० बिमलचरणलाहामहोदयस्तस्या अध्यक्षत्वेन नियोजितः तथापि यतीन्द्र एव तस्या प्राणा आसीत्। अय महाभागो मनस्वितया कारुण्येन सदुद्योगेन च ऋषिकल्पो बभूव। संगीतेऽभिनयाय च भूयसी रुचिः तस्य अभवत्। अनवरत कर्मयोगमार्गमनुसरन्नसौ न कदापि विरराम। नारीमात्रमसौ मातृदृशापश्यत्। भारत-विवेकेऽसावाह—

अमृतमथितं सागरजननं मातरि निहित तुलनाहीनम्।
माक्षरकथन कल्मषदहनं तृ सदा भवाब्धितरणे तरणम्॥

भारतहृदयारविन्देऽसौ देशप्रेम्णो धन्यता रूपयति। विश्वबन्धुत्वे च सुदृढा तस्य श्रद्धा अभवत्।

यतीन्द्रस्य रचनासु काव्यनाटकानि, शोधप्रबन्धा', सम्पादित-ग्रन्था अनुवादाश्च विलसन्ति। स्वजीवनस्य चरमदशाब्देषु तेन त्रिशत् सस्कृत-नाटकानि प्रणीतानीति विस्मयकरमेव। एक तस्य नाटकं पालिभाषाया विद्यते। शेक्सपीयरकवे' 'ओथेलो' तथा च 'मर्चेण्ट ऑफ वेनिस' इति द्वे नाटकेऽप्यनेनानूदिते प्रकाशिते च। अन्यच्च-शक्ति-साधनम्, मातृलीलातत्त्वम्, विवेकानन्दचरितचम्पूश्च तस्य काव्यानि सन्ति।

यतीन्द्रस्य शोधकृतिषु सस्कृतसाहित्ये नारीणामवदान सप्तभागेषु, मोहम्मदीयाना सस्कृतसरक्षण त्रिषु भागेषु, स्मृतिसाहित्ये बगानामव-दान त्रिषु भागेषु सन्ति। बगीय दूतकाव्येतिहासमप्यसौ अरचयत्।

तेन सस्कृतकोशकाव्यसग्रहो बहूनि दूतकाव्यानि च सम्पादितानि। ऐतिहासिककाव्येषु अब्दुल्लाचरित-सुर्जनरित-वीरभद्रचम्पू-जामविजय-काव्यानि तेन सम्पाद्य प्रकाशितानि। बगलाभाषायामपि तेन बहवो ग्रन्था विरचिता'।

१९६४ ई० वर्षे हृदयगत्यवरोधेनासौ अकालकालकवलित.। अचिर-मपि पूर्णं तदीयजीवनमभूदिति न सशय'।

कथावस्तुदृष्ट्या चतुर्विधानि यतीन्द्रस्य नाटकानि सन्ति।

(१) मातृभूमि-वर्णनात्मकानि।

(२) लोकनायकगाथात्मकानि।

(३) नारीगौरवात्मकानि।

(४) वैष्णवभक्तिचरितात्मकानि।

एतत्क्रमेण तस्य नाटकान्यत्रानुशीलितानि।

## महिममयभारतम्

उपरूपकं महिममयभारतम् १९५८ ई० वर्षे रचितम्। प्रस्तावनायां सूत्रधारो वस्तु परिचाययन्नाह—'वैदिक पौराणिक-महम्मदीय वर्तमान-युगेषु नदीमातृकापूजन-संयमनादिकमधिकृत्य विरचित रूपकम्।'

सिन्धुक्षित् नामा वैदिकर्षि' सिन्धुनदीं पूजयामास। नद्यो मातृवत् पूज्या इति तेन निर्दिष्टम्। द्वितीयाङ्के गङ्गाप्रादुर्भावो वर्णितः।

तृतीयाङ्के शाहजहाँ तनया जहाँनारा यमुनां स्तौति। चतुर्थाङ्के रामरहीमौ द्वौ कर्मकरौ सवदत । रहीमो गान्धी प्रशसति—

स्वाधीनतां स्थापयितु स्वदेश आजीवन यो युयुधे नयज्ञ'।
दयालवे गान्धिमहात्मने मे नमोऽस्तु जाते जनकाय तस्मै ॥

नवभारतयुवानो देशोन्नतये नदीबन्धनजलप्रवाहण-विद्युदुत्पादनमत्स्यपालनादिविषये वार्ता कुर्वन्ति।

महिममयभारत परम्परानुबद्धमपि नवीन नाटकमस्ति। अत्र पञ्चसु अङ्केषु परस्परमसम्बद्धा वैदिक पौराणिक मुहम्मदीय।धुनिकयुगगता घटना सन्ति। दृश्यस्थली देवलोकात् भारतेषु प्रसृता। मातृभुव प्रति प्रेम्णो जागरणमेव कवे प्रयोजनम्। कार्यव्यापारस्यात्र अभावो दृश्यते। केवलं शाब्दिका मानसिका वा व्यापारा प्रचरन्ति।

## मेलनतीर्थम्

मेलनेन भारतं तीर्थ स्यादिति धारणया कविनेद रूपक प्रणीतम्। प्रथमाङ्के अथर्वा शिष्यै सह वैदिकसस्कृति समुपादिशन् दृश्यते। द्वितीयाङ्के मलयपवते अगस्त्यो स्वपत्न्या सह तथैव यतमानो वरीवति। तृतीयाङ्के अशोकस्यानुभाव. समुदित। पञ्चमाङ्के अकबरस्य लोकप्रशान्तिकारिणी सवधर्मसमन्वयनीतिर्वणिता। पष्ठाङ्के चैतन्यस्य वैष्णवभक्तिभागीरथी प्रवहति। सप्तमाङ्क विवेकानन्दस्य विश्वोद्धारमार्गः चर्चित। अष्टमे रवीन्द्र. विश्वजनीनतया स्वसत्त्व समुदित विधाय भारतान् विश्वगुरुत्वे प्रतिष्ठापयति। नवमाङ्के गान्धिनो नोआखालीयात्रा निदर्शिता। अन्तिमेऽङ्के जवाहरलालस्य विश्वमैत्रीप्रयासो वर्णित।

## भारतहृदयारविन्दम्

नाटकमिद १९५९ ई० वर्षे प्रणीतम्। अत्र महर्षेरविन्दस्य चरितं चित्रितम्। अरविन्दस्य सन्देश सम्यगत्र वर्णित'—

विज्ञानैरथ धर्मदर्शनकलाशास्त्रैश्चिरादुन्नता
प्येषा भारतभूमिरद्य भजते कष्ट पराधीनताम्।

छित्त्वा पाशमिमं तदीयवदनं फुल्लं विधातुं वयं
कुर्मः किञ्चन कर्म देशहितकृद् यद् यस्य योग्यं भवेत् ॥

नाटकमिदं भावप्रवणं विद्यते। यत्र तत्र गीतानां भूयान् समावेशो विहितः। अभिनये क्वचिद् मुष्टामुष्टियुद्धैर्विशिष्टरुचिरता वर्द्धते। वस्तुतो यतीन्द्रः स्वनाटकेषु अन्यत्र विरलं ससारं सृजति।

## भास्करोदयम्

जीवनचरितात्मकं भास्करोदयं नाटकं कवीन्द्ररवीन्द्रस्य जीवनचरितमुपनिबध्नाति।

१९६० ई० वर्षे रवीन्द्रस्य शतवार्षिक्या अवसरेऽस्य प्रणयनमभवत्, न केवलं भारतेषु विदेशेष्वपि इदमभिनीतम्। भास्करोदय-भारतभास्कर-भुवनभास्करेषु त्रिषु भागेषु समग्रमपि कवीन्द्रस्य जीवनमत्र समुपस्थापितम्। तृतीयाङ्के बालको रवीन्द्रः गवाक्षात् बहिरवलोकयन् निसर्गसान्निध्यमनुभवति—

वटद्रुमजटालस्त्वं छायामायावपुर्धरः।
अन्यस्ते राजते कोऽसौ विभुर्विश्वविमोहनः ॥

गोपालिका तारामसावाह—

पुष्करिणीदर्पणेऽहं पश्यामि विश्वचित्रम् ॥

अस्मिन् रूपके रवीन्द्रस्य जीवने घटितानां समेषामपि प्रसङ्गानां निरूपणमसम्भवमेव आसीत्। अत एव सामाजिकानां कुतूहलवर्धनाय अंशत एव ते अवतारिताः। विष्कम्भक-प्रवेशकौ निराकृतौ। एकोक्तीनां भूयान् प्रयोगो विहितः। प्रयोगे हास्यावतारणा यतीन्द्रस्य विशिष्टा प्रवृत्तिः। तद्यथा सप्तमाङ्के अक्षयस्य गीतम्—

आनन्दभोजनं परमसुशोभनं
केनापि कारणेन नापेक्षणीयम्।
प्रतिवृक्षं विकसिता लजेसलता सदा हिता।
शष्पेषु दृश्यते दलं दलं चकलेटा पराह्णयम् ॥

## भारत-विवेकम्

भारतविवेकं नाटकं १९६३ ई० वर्षे प्रकाशितम्। अत्र विवेका-

नन्दस्य सत्त्वविकासो निरूपितः। विवेकानन्दस्य विचारसरणिरित्थ प्रकटिता—अहो लक्ष-लक्ष-सन्यासिनो वय भारतवर्षस्य कठोरश्रम-लब्धान्नपुष्टा देशवासिनां हितार्थं कि कुर्मः। अपि दर्शन-शास्त्र-जटिल-तथ्यमात्रभाषणपरा एतान् न वक्ष्यायम इत्यादि।

नाटकमिद दृश्येसु विभक्तम्। अत्र द्वादश दृश्यानि विलसन्ति। पञ्चमदृश्ये विष्कम्भक-दृश्यान्तरे विद्येते। रुचि-परायण-सगीतनृत्ययो-विपुलोऽत्र सम्भारो वरीवर्ति। तद्यथा खेतडीनरेशसभाया विवेकानन्दस्य स्वागतगानम्।

यमुनाहृदयशोभिपुण्यमधुरजल
दूषितखातवाहि यदिद समल।
गगास्रोतसि जात पवित्र सकल
हर हर दोषान् मम सर्वदोषहर॥ ११ २१८

पदे पदे श्रीरामकृष्णपरमहसस्य भक्तिगीतान्यपि तत्र समाविष्टानि। दशमदृश्ये धीवरगीतं मनो रमयति। हास्यसृष्टौ लेखकेन सर्वथा नैपुण्य प्रदर्शितम्। विवेकानन्दस्य विवाहविषये नापित-घटकादीना सवादोऽनया दृष्ट्यैव प्रवर्तित। नवमदृश्ये हास्यप्रवर्तनाय कश्चिदाह—

स्त्रियो देवा' स्त्रिय प्राणा स्त्रियश्चैव विभूषणम्।
स्त्रीसगिना सदा भाव्यं साधुना मुक्तिकामिना॥

अस्मिन् नाटके महामानवस्यैकस्य समग्रजीवन-दर्शन पाठकाना-मुदात्तीकरणाय कल्पते।

## विश्वविवेकम्

विश्वविवेकमिति नाटकेऽष्टाङ्केषु आविदेशयात्राया यावज्जीव विवेकानन्दचरित ग्रथितम्। विश्वधर्मसम्मेलने तस्य व्याख्यानमत्र प्रधानो विषयः। विवेकानन्दस्य अमेरिकायां तपोमयजीवन साधु निरूपितम्।

## स्वप्नरघुवंशम्

स्वप्नरघुवंश यतीन्द्रस्य प्रथमनाटकम्। रघुवशमाश्रित्यास्य कथा प्रवर्तते। १९५८ ई० वर्षे उज्जयिन्या कालिदासमहोत्सवेऽस्याभिनयोऽभवत्।

## भारतजनकम्

भारतजनके यतीन्द्रेण राष्ट्रपितु. गान्धिनश्चरितकथा अफ्रीकायात्राया आरभ्य आजीवन निरूपिता। अत्र षोडश अङ्का सन्ति। अत्र भारतीयेषु गोरण्डानामत्याचार, महात्मनो सत्याग्रहनीति', भारतस्वातन्त्र्य च सम्यग् वर्णितानि।

## भारतराजेन्द्रम्

१६६३ ई० वर्षे यतीन्द्रो भारतराजेन्द्र नाटकमरचयत्। अत्र राजेन्द्रप्रसादस्य चरितगाथा विद्यार्थिजीवनमनु विषयीकृता। यदा राजेन्द्रो गान्धिन' सम्पर्कमाप्नोति तदा जन्मान्तरगता तस्य साधना स्पन्दते। गान्धी स्वविचिकित्सा तत्समक्षमुपस्थापयामास—

इदं भरतभूतलं चिरनिपीडित दुर्जनै
निरन्नवसनप्रज हृतहिरण्यरत्नादिकम्।
समुन्नमयितुं मयि प्रयतमानसे साम्प्रत
विभो वितर पीडिते समुचिता शरीरस्थितिम्॥

अस्मिन् नाटके क्वचित् यतीन्द्रस्य चित्रोपमवर्णनानि हृदयमावर्जयन्ति। तथा कस्तूरबामहाभागाया चुल्लीज्वालनम्—

फूत्कारशुष्करसना भसिताचिताङ्गी
चुल्हीमुखप्रसृतधूमसमाकुलाक्षा।
दीप्यन्निमीलद्वलोहितहर्षशोका
पर्याकुलास्ति जननी ज्वलनाय चुल्लया.॥

## सुभाषसुभाषम्

सुभाषसुभाषे षडङ्का सन्ति। अत्र सुभाषचन्द्रस्य विद्यार्थिजीवनमनु विदेशयात्राया आख्यानमुपनिबद्धम्। स्वातन्त्र्यसग्रामे तस्य नेतृत्वम्, तदर्थं विदेशेषु तस्य बलसञ्चयश्चेति प्राधान्येन चित्रिते। अस्मिन् नाटके भारतीयशौर्यस्य वीरोत्साहवर्धिनी गाथा प्रपचिता।

## देशबन्धुदेशप्रियम्

देशबन्धुदेशप्रियमिति नाटके नवांके देशबन्धुचित्तरञ्जनदासस्य महिममयजीवन निदर्शितम्। चित्तरञ्जनदासो वाक्कीलव्यवसाय-

मुज्झित्वा देशसेवाव्रतमुररीकृत्य बंगालप्रदेशस्य श्रेष्ठस्वातन्त्र्यसेनानीभिः सहकार्यनिरतोऽभवत्। कारागारयन्त्रित स तपोमयं जीवनमयापयत्।

## रक्षकश्रीगोरक्षम्

रक्षकश्रीगोरक्षस्य सप्ताकेषु महात्मनो गोरक्षनाथस्य चरितमुपनिबद्धम्। तस्य योगसिद्धि गोरक्षसस्कृते' प्रचारश्चात्र निर्दिष्टौ।

## निष्किञ्चनयशोधरम्

सप्ताङ्के निष्किञ्चनयशोधरे गौतमबुद्धपत्न्या यशोधराया महिमशालिन्या गौरवगाथाया निदर्शन विद्यते। भारताचार्य महाकवि-महामहोपाध्यायपद्मभूपणादिमानपदोपेतै बगदेशस्य शीर्षस्थसस्कृतनाट्यकारैः श्रीमद्हरिदाससिद्धान्तवागीशैरस्य रूपकस्य आशीर्वाणीत्थ प्रकटिता—

'तदेतन्न केवल त प्रति स्नेहप्रकटनार्थ न च केवल तस्यैवविधां ज्ञानलिप्सामधिकृत्य मदभिप्रायप्रकटनार्थं वा, पर तस्याय प्रयत्नपण्डितसमाजस्य कियानुपकारक इत्यत्र जनाना प्रबोधनार्थमपि।'

पूर्वं कथामात्रशेषापि यशोधरा यतीन्द्रस्य बहुविधान्वेषणै सुकृतधन्या बभूव। सा पत्यु धर्मसघ-प्रतिष्ठायै आजीवनमयतत।

अत्र प्रथमाके यशोधरासिद्धार्थयोर्विवाहस्य कथा विद्यते। शुद्धोदनो यशोधराया गुणै प्रभावित कथयति—

गोपा विशुद्धगुणभूषणजातशोभा
पुत्रोऽपि मे न समनामनया प्रयाति।

द्वितीयाङ्के यशोधराया उत्स्वप्नायितस्य शुभव्यञ्जना सिद्धार्थो व्यञ्जयति।

हर्ष लभस्व न च खेदमवाप्नुहि त्व
तुष्टि च विन्द जनयाद्य ममापि हर्षम्।
तूर्णं भविष्यति धराखिलमोहमुक्ता
गोपे प्रिये सकलमेव शुभ निमित्तम्॥

प्रव्रजिते गौतमे यशोधरा पतिगृहे तपोमयजीवन व्यतीतवती। अन्ततश्च तस्या अनुरोधेन गौतमो भिक्षुणीसघनिर्माणमनुमेने सप्तमाके ७८ वर्षीया वृद्धा यशोधरा इहलीलासमाप्त्यर्थ गौतमस्यानुमति याचते।

अत्र हास्यविकासाय रंगपीठे मर्कटविषयक गीतं रुचिरं विद्यते—

अहो जीव वृक्षचर कलिप्रिय।
विक्रम ते प्रकाशय झम्पे झम्पे हासय
धीमतो दर्शय वदनश्रिय. ॥ ४ ५१

यशोधराया जलसेचनेन अन्धाया प्रजावत्या दृष्ट्यापादन निष्क्रमण-पथे सिद्धार्थस्य देवात् काषायप्राप्तिरित्याद्य प्रसगा अद्भुतरस निष्पादयन्ति।

## शक्तिसारदम्

शक्तिसारदे रूपके श्रीमद्रामकृष्णपत्न्या सारदायाश्चरितगाथा विद्यते। प्रत्येका नारीर्जगज्जनन्या अशभूता सारदामणिश्च महाजननी-त्यत्र प्रतिपाद्यम्। काहमिति पृष्टो रामकृष्णस्तामवादीत्—

येय सृष्टिलयस्थितिप्रणयिनी काली करालानना
या चेद कृपया शरीरमसृजत सर्वार्थससाधनम्।
सा मे मन्दिरवासिनी 'नहबत'-स्था चापि मे यादृशी
त्व तादृश्यसि लेशतोऽपि न ततो भिन्नेति मन्ये ध्रुवम्॥

ज्येष्ठमावस्याया तां त्रिपुरसुन्दरीवेषे सज्जयित्वा रामकृष्ण' पूजयति। पूजामनु उभौ समाधिस्थौ भवत। रामकृष्णस्य महाप्रयाण-समये सारदा कथयति—'अनन्तोऽपारो महासमुद्रस्त्व। तत्राह केवलम् एको जललव एव। रामकृष्ण प्रत्याह—न त्व बिन्दु, सिन्धुरेव त्वम्। त्वमेव मे शक्ति, मम साधना मम सिद्धिश्च। जीवनव्रत मे त्वय्येव प्रमूर्तं जातम्।

यतीन्द्रस्य भाषा नाटकोचिता, क्वचित् भावानुरूपनादात्मक-शब्दप्रयोग सुखावहश्चास्ते। यथा—'जपसमये मनो वानरवल्लम्फझम्पं वाञ्छति।' गीतानां प्रचुरसन्निवेशे हास्यसर्जनेऽपि नाट्यकार' पटु।

'मुक्तिसारदे' श्रीरामकृष्णस्य दिवंगमनमनु सारदायास्तानि तानि चरितानि वर्णितानि।

## आनन्दराधम्

आनन्दराधे रूपके राधाकृष्णयोर्गाथा विद्यते। एकदा घोरदुर्दिने

राधा कृष्ण रक्षति। अन्यदा च तुलसी तामाशीर्वदति—'श्रीकृष्णः सदा तव हृदयलग्नो विलसिष्यति। त्वा समाश्रित्यैव स राधावल्लभ इति परमशोभनामभिधामवाप्स्यति।'

## प्रीतिविष्णुप्रिय, अमरमीरम्, भारतलक्ष्मीः

प्रीतिविष्णुप्रिये चैतन्यपत्न्या विष्णुप्रियायाश्चरितगाथा निबद्धा। भक्तिविष्णुप्रियेऽपि तत्सम्बन्धिकथा अग्रे सरति।

'अमरमीर'-नाटके मीरादेव्या विवाहोत्तरजीवनगाथा द्वादशाङ्केषु सविस्तर प्रपञ्चिता।

भारतलक्ष्मीरिति रूपके यतीन्द्रेण दशसु अङ्केषु सुग्रथिताया झासी-राज्ञ्या लक्ष्मीदेव्याश्चरित निबद्धम्।

## महाप्रभुहरिदासम्

महाप्रभुहरिदासमिति रूपकस्य रचना यतीन्द्रेण पुर्यां रथयात्रोत्स-वावसरे १९५८ ई० वर्षे कृता। १९६० ई० वर्षं यावदस्य दश प्रयोगा. अभूवन्। अत्र स्वामिनो हरिदासस्य भक्तिप्रवणता चित्रिता। पञ्च-मांकस्यतृतीये दृश्ये छायातत्त्वानुसारि गर्भनाटकसंयोजितम्। अत्र श्रीवासो नारद हरिदासश्च नगररक्षकमभिनयति। अनन्तर महाप्रभु' राधारूपे-णापि आयाति कथयति च—'इय तवैव राधाह भाग्यवशाद् दूरं नीता। त्वत्पादपद्मे चिरेणैव लीना भविष्यामि।' अन्तिमे सप्तमाके हरिदास' लक्षत्रयनामजपव्रत पूरयितुमसमर्थ चैतन्यस्य पादपद्म वक्षसि निधाय ब्रह्मणि लीन'। दिवङ्गते तस्मिश्चैतन्यमहाप्रभुराह—'हरिदास तव पादस्पर्शेन धन्या जाता धरणी। तव स्पर्शादहमपि अस्मि धन्यतम। अद्य प्रभृति तव भक्ति' प्रवहतु नदी कल्लोलेषु, वहतु च सा पवनगतौ। काननपुष्पेषु भवतु सा विकसिता, पक्षिकण्ठेषु ध्वनिता, पार्थिवरज.सु प्रतिकणमुल्लसिता।

अस्मिन् रूपके सवादेषु शिष्टाचारपद्धतिः व्यवहारबोधाय समगीकृता।

## विमलयतीन्द्रम्

विमलयतीन्द्रे रामानुजाचार्यस्य चरितगाथा चकास्ति। नातिदीर्घे-ऽस्मिन् रूपके सप्तदशाङ्का' सन्ति। विमलयतीन्द्रमिव 'दीनदासरघु-नाथम्' इति रूपकमपि वैष्णवभक्तिधाराप्रतिपादकम्।

यतीन्द्रेण स्वरूपकेषु शास्त्रीयविधानस्याक्षरशोऽनुसरणमकृत्वा लोकरुचिरेव प्रायशोऽवेक्षिता । शृङ्गारितप्रवृत्तिभ्योऽस्पृष्टानि रूपकाणि रचयित्वा स संस्कृतनाट्यकारान् प्राचीनगड्डरिकाया बहिरागमनाय प्रबोधयामास । स्वनाटकानां विषये स स्वयमेवैतदाह—

It has been my ambition, to popularise, 'Sanskrit amongst all sections of people of India And it is for this purpose that our dramas have been composed The cosy flow of Sanskrit must not find any impediment in the rocky thickets of obsolete words or cross-currents of peculiar uses and easy Sanskrit, I have learnt from experience, is quite intelligible to Indians with an average education' ( आनन्दराघव—भूमिका पृ० ८ )



# रमाचौधुरीदेव्याः नाट्य-साहित्यम्

चौधुरीत्युपाह्वयस्य डा० यतीन्द्रविमलस्य पत्नी डा० रमा चौधुरी बहूनि संस्कृत-नाटकानि प्रणीतवती। रमा यतीन्द्रेण सार्धमेवाधीत्य आक्स-फोर्डविश्वविद्यालयस्य 'डी० फिल्' इत्युपाधिमुपलेभे। सा त्रिंशद् वर्षाणि यावद् 'ब्रावोर्न कालेजे' प्राचार्यपदमलङ्करोति स्म। तत सप्त वर्षाणि यावद् रवीन्द्रभारती-विश्वविद्यालये कुलपतिपद निरवहत्। सा गण्यमानासु तास्वादर्शमहिलासु विद्यते, यासा कर्मठतया, कलासाधनया, औदार्येण च भारतभारती महिमशालिनी विद्यते।

डा० रमाया पितामह आनन्दमोहनबोसो न केवलम् उच्चकोटिको मनीषी विधिपारङ्गत ( Bar-at-Law ) आसीत्, अपि तु भारतीय-राष्ट्रियसभाया ( Indian National Congress ) अध्यक्षोऽवर्तत। स साधारणब्रह्मसमाज-संस्थापकेष्वन्यतम आसीत्। तस्य शिक्षा दीक्षा आंग्लराष्ट्रे सम्पन्ना। स खलु गणितविषयमधिकृत्य कैम्ब्रिजविश्व-विद्यालयस्य 'रैंगलर" इत्युपाधिमुपलब्धवान्। प्रसिद्धो वैज्ञानिक. 'सर' जगदीशचन्द्रो वसुस्तस्या पितुर्मातुल आसीत्। रमाया मातुल प्रयाग-विश्वविद्यालयस्याऽध्यक्ष आचार्य ( Professor ) ए० सी० बनर्जी बभूव। कवयित्र्या पिता सुधांशुमोहनो विधिपारङ्गत बंगीय जनसेवा-योगस्याध्यक्षश्चासीत्। एवम्भूतेऽभिजातवंशे समुत्पन्नाया रमाया-श्छात्रजीवन प्रतिभापूर्णाभिरुपलब्धिभिर्मण्डित विद्यते। कलिकाता-विश्वविद्यालयस्य दर्शनपरीक्षासु प्रथमश्रेण्यामुत्तीर्णछात्रेषु सा प्रथमपद लब्धवती।

प्रायेण विंशति-वर्षाणि यावत् रमा भारतस्य विविधस्थानेषु विदेशेषु च स्वस्य यतीन्द्रस्य च नाटकानामभिनयमुच्चस्तर प्रयोजयते। नाटकानामभिनयद्वारा भारतीयसांस्कृतिकप्रवृत्ति कल्याणोन्मुखी इति प्रपत्तौ सा जीवनस्य सार्थकतां मनुते। इय तस्या अनुभावस्य महिमा यदनेकसांस्कृतिकसंस्थाना शैक्षणिकसंस्थानाना च साध्यक्षादिपदान्य-लङ्करोति। १६७० ईसवीये जर्मनप्रशासनेनोच्चकोटिकभारतीयनागरिक-

रूपेणा सा सम्मानिता । १९७१ ईसवीये रूसप्रशासका द्वाभ्यां कुलपतिभ्या सममिमा सम्मानयामासु' । सस्कृतनाटकातिरिक्ता' कवयित्र्या अधोलिखिता कृतयो वर्तन्ते आगल भाषायाम्—

( 1 ) Doctrines of Nimbārka and his Followers ( in 3 Vols )

( 2 ) Sufism and Vedānta

( 3 ) An Indo-Islamic Synthetic Philosophy

( 4 ) Doctrines of Shrikantha, ( in 3 Vols )

( 5 ) Sanskrit and Prakrit Poetesses

( 6 ) Philosophical Essays

( 7 ) Ten schools of Vedānta

**बंगभाषायां रचनाः**

( ८ ) दशवेदान्त सम्प्रदाय ओ वगदेश । ( ९ ) साहित्यकण ।

( १० ) निम्बार्कदर्शन । ( ११ ) वेदान्तदर्शन ।

( १२ ) सूफीदर्शन ओ वेदान्त ।

एव प्रतीयते यद् रमाया नाट्य प्रति प्रवृत्ति पत्यु कार्यसरणिममरा निर्मातुं विद्यते । तद्यथा—शङ्करशङ्करस्य प्रस्तावनायाम्—

"यतो यतिश्रेष्ठ यतीन्द्रविमल-पुण्यजीवनसाधनापि न म्लाना शुष्का च भविष्यति कदापि । सा स्फुटिता राजिष्यते निरन्तर यतीन्द्रविमल-जीवन-सर्वस्वाया यतीन्द्रविमलैकजीवनाया डाक्टर-रमाया रमणीय-जीवने ।

## शङ्कर-शंकरम्

शङ्करशङ्करस्य प्रथम. प्रयोग' प्राच्यवाण्या १९६५ ईसवीयस्य द्वाविंशत्तमे प्रतिष्ठादिवसे विहित' । इद तावद्रमाया द्वितीय नाटकम् । कवयित्र्या प्रथम नाटकं यतीन्द्र-यतीन्द्रमस्ति । भारतीयदूतावासस्य समाश्रयेणास्याभिनय संवृत्त. । अस्य प्रेक्षकेषु नेपालनरेशो महाराजो महेन्द्र सपरिवारो विराजते स्म । महाराजेनास्य सर्वेऽभिनेतार. पुरस्कृताः ।

## कथावस्तु

शिवगुरुर्महादेवे प्रत्यक्षे पुत्रस्योत्पत्तेर्वरमयाचत । शिव. सर्वज्ञं, किन्त्वल्पायुष पुत्र तस्मै प्राददात् । शङ्करस्य कृपया समुपलब्धस्य पुत्रस्याभिधान शङ्कर इति कृतम् ।

अष्टवर्षीयः शङ्कर उपनीतो ब्रह्मचारिवेषमवाप्तवान् । एकस्मिन् दिने केरलनृपती राजशेखरस्तस्य दर्शनायागत । भवन्त श्रेष्ठाः सन्यासिनः सन्तीति तेनाभिहितम् । एक हस्तिनम्, बहवश्च स्वर्णमुद्रास्तस्मै समर्पितवान् । शङ्करस्तत्सर्व नास्पृशत् । राजा तस्मादुपदेश गृहीत्वा गत । तदानीमेव तस्य जननी तत्रागता । तया कथितम्—अष्टमे वर्षे तव मृत्युयोगो वर्तते । एतस्मादेव भयात् तव समीपमागतास्मि । शङ्करेण कथितम्—भवती मा सन्यासायादिशतु । सन्यासी मृत्युभयाद्विमुक्तो भवति । जनन्या कथितम्—अहं विधवास्मि । नास्ति कोऽपि ममाश्रय ।

अथ शङ्करो मातुराज्ञया स्नातु गत । तत्र नद्यां त ग्राहो जग्राह । स मातरमाह्वयामास । कोऽपि शङ्कर मोचयितु न शशाक । ततस्तेन कथितम्—भवतीं सन्यासस्यानुमति प्रददातु, एतेन मम मोक्षो भवितुमर्हति । कृपणा सती माता तथा स्वीचकार । शङ्करो ग्राहान् मुक्त । अथ पुनरपि जननी तं न परित्यजति स्म । अन्तत समयपूर्वक स मुक्तो यत् स्मरणसमकालमेव समागन्तव्य भवता । शङ्कर प्रव्रज्या गृहीतवान् ।

तृतीयदृश्यस्यारम्भ. शङ्करस्यैकोक्त्या सम्पद्यते । तत्र स गुरुवन्दनं, दिवसलक्ष्म्याश्चर्चां, मासद्वयस्याश्रमवासस्य विमर्शं, तपोवर्णन नर्मदास्तुतिञ्च प्रकुरुते । ओङ्कारनाथनाम्नि स्थले कतिपय संन्यासिनस्त मिलन्ति । एकेन शङ्कर दृष्ट्वा कथितम्—

कान्ते स्फुटत्वान्न शशाङ्क एष द्युतेरतैक्ष्ण्यान्न सहस्ररश्मि. ।
स्फुटप्रकाशोऽखरदीप्तिरस्य क एष तेजस्विवरोऽतिसौम्यः ॥

सन्यासिनस्ते शङ्कर वीक्ष्याश्चर्यचकिता आसन् यदयं बालसन्यासी अतिदूरमध्वान पद्भ्या समागत. । शङ्करस्तान् समादधौ यद् "भगवता सह मेलनकामि प्रेमैव तत्र कारणम् " ।

शङ्करस्य मनोनीता आचार्यगोविन्दपादाश्चिराय समाधिलीना

आसन्। अनेके सन्यासिनस्तेषा तस्या' स्थिते. समाप्ति कामयमाना अवर्तन्त। अन्धकारावृताया गुरुगुहायां शङ्करो दीपमादाय प्रविष्टवान्। तत्र तास्तुष्टाव। अथ तै पृष्ट आत्मपरिचय ददौ—

नादिर्ममान्तो न च देशकालौ न नामरूपे विदिते मम स्तः।
द्वितीयहीन पुनरस्मि तत्त्व सत्तास्मि सत्य च तथाद्वितीयम्॥

तादृश नाम श्रुत्वाचार्यास्तमूचु—चिरकालात् तवैव प्रतीक्षा मम।

अथ गोविन्दपादात् "सर्व खल्विद ब्रह्म" "तत्त्वमसि" इति श्रुत्वा व्युत्पन्न शङ्करो जीवन्मुक्तो बभूव। ततो गुर्वादेशात् लोकहिताय पार्थिवजीवनधारण स्वीकृतवान्। तत्कृते आचार्यादेश आसीत्—दिग्विजय कुरु, प्रचारय महिममय ब्रह्मतत्त्वम्, सर्वमेव ब्रह्मेति।

चतुर्थे दृश्ये शङ्करो वाराणसीमागच्छति। पद्मपाद-सनन्दननामानौ शिष्यौ तेन सार्धमास्ताम्। अथ स तत्रैका सद्योविधवा ददर्श, या पतिशवस्य पार्श्वे रोदिति स्म। शङ्करस्ता पत्युः शव परित्यक्तुमुपदिदेश। तयाभिहितम्—अयमपि ब्रह्मरूप.।

ततस्तस्या उपदेशाच्छङ्करेणावगत यद्ब्रह्मातिरिक्ता शक्तिस्वरूपिणी जगज्जननी एव कर्त्री, धर्त्री, हर्त्री च। जगति सर्वमेव सा। सा हि केवलम्।

ततोऽग्रे स चतुर्भि. कुक्कुरै' सह चाण्डालराजमपश्यत्। शङ्करशिष्येण स भर्त्सित—अपवित्रै सारमेयैः सार्धमपसर। चाण्डाल. चुक्रोध। अथ शङ्कर पप्रच्छ प्रश्नान्। चाण्डालेन कथितम्—त्व मद्विग्रहम् आत्मान वा कुक्कुरान् दूरयितुमादिशसि। अह मम कुक्कुराश्चापि ब्रह्मैव सन्ति। तर्हि कीदृशी जुगुप्सैतेभ्यः। इत्यभिधाय सोऽन्तर्दधौ। शङ्करेणाधिगतं यत् सर्व खल्विदं ब्रह्मेति ज्ञान व्यवहारेऽसाध्यम्।

तत' पश्चात् स प्रत्यक्ष शिवमपश्यत्। शिवस्तमादिदेश—त्वया ब्रह्मसूत्राणा नवीन भाष्य लिख्यताम्। अथ शिवाज्ञानुसार स ब्रह्मसूत्र-भाष्यलेखनाय बदरिकाश्रम प्रति प्रातिष्ठत।

पञ्चमदृश्ये शङ्करो बदरिकाश्रमस्य व्यासतीर्थे विद्यते। तेन ब्रह्मसूत्र-भाष्य निष्पादितम्। स शिष्यै. समं दिग्विजयार्थं प्रातिष्ठत। अस्मिन्नन्तराले तेन उपनिषदा भाष्य प्रणीतम्।

षष्ठे दृश्ये शङ्करो गोमुखीतीर्थं गतवान्। तत्र हिमाचलस्य आकाशेन संस्थिति' प्रकामरुचिरासीत्।

सप्तमे दृश्ये शङ्करस्यानन्दगिरि-गुरुणा वृद्धब्राह्मणेन साकं विवादो भवति। गुरुणोक्तं यच्छङ्करस्य वय. षोडशवर्षाण्यवर्धत। तस्य जीवनावधिः सम्प्रति द्वात्रिंशद्वर्षाणि वर्तते। स वृद्धब्राह्मणो वेदव्यास आसीत्। व्यासेन शङ्करकृतं ब्रह्मसूत्रभाष्यं समवलोकितम्।

अष्टमे दृश्ये शंकरः कुमारिलेन समं शास्त्रार्थमैच्छत्? कुमारिल तुषानले आत्मदाहं चिकीर्षुरासीत्। स शङ्करं दृष्ट्वा विलोक्य तस्य प्रसन्नताया कारणमपृच्छत्। शङ्करेणोक्त—अद्याहं तव बलिं दास्यामि। वेदान्तयज्ञाय भवान् सर्वोत्तमो बलि'। कुमारिलोऽब्रवीत्—अहं तु पापद्वयप्रायश्चित्ताय चितारोहणं करोमि। मीमांसामधीत्य निरीश्वरवादिता मम प्रथमं पापम्, बौद्धगुरुधर्मपालवधाय प्रेरणा द्वितीयं पापम्। कुमारिलो बौद्धविहारे धर्मपालाचार्यादधीतवान्। धर्मपालो वेदं निनिन्द। एतत् सर्वं कुमारिलस्य कृतेऽसह्यमासीत्। तस्य प्रतिवादेनाप्रसन्न आचार्यस्तमुच्चप्रासादान्नीचै पातयामास परन्तु कुमारिलोऽक्षत आसीत्। ततो धर्मपालस्तेन सह शास्त्रार्थमकरोत्। अथ शास्त्रार्थे पराजितः तुषानलं आत्मदाहं चकार इत्यखिलं वृत्तान्तं निवेद्य कुमारिलेनोक्तम्—मम शिष्येण मण्डनेन शास्त्रार्थोऽनुष्ठीयताम्। तस्य पराजयो मम पराजयो भवेत्। एतदनन्तरं कुमारिल तुषानले दग्ध।

माहिष्मत्यामष्टादशदिवसानि मण्डनेन शास्त्रार्थोऽभूत्। यदा शङ्करस्य पराजयो नाभूत्तदा मण्डन स्वपत्न्या उभयभारत्या सहायतां गृहीतवान्। साब्रवीत्—अहं मण्डनस्यार्धाङ्गिणी वर्ते। ममापि पराजयान्मम पत्यु. पराजयो भविष्यति। अथ पुन' शास्त्रार्थायोजनं बभूव। उभयभारती आत्मन पक्षं शिथिलमवलोक्य कामशास्त्रीयं प्रश्नं शङ्करमपृच्छत्। शङ्करेणोक्त--ब्रह्मचारित्वात्तदुत्तरं दातुं न शक्नोमि। मासावधिर्दीयताम्। तदनन्तरं तदुत्तरमपि दास्यामि।

दशमे दृश्ये शङ्करश्शैलतीर्थे कापालिकमुग्रभैरवं पश्यति। उग्रभैरवस्तमवलोक्याब्रवीत्—शिवेनोक्तोऽस्मि यद् यदि मोक्षमभिलषसि, तर्हि कस्यचित् सर्वज्ञस्य बलिं प्रयच्छ। शङ्करस्तेन समं बल्यर्थं भैरवपीठ

गत । अथ यावदुग्रभैरव शङ्करस्य बलिं दातुमियेष तावदेव शङ्करशिष्या-स्तमेव कापालिकं यमसदनातिथिं कृतवन्त ।

एकादशे दृश्ये शङ्कर काश्मीरेषु शारदापीठं गतवान्। तत्र विविध-शास्त्रज्ञान् पण्डितान् पराजित्यैव स शारदापीठं प्रवेष्टुं शक्नोति स्म। अत तत्रत्यान्निखिलान् पण्डितान् पराजितवान्।

द्वादशे दृश्ये शङ्कर कामरूपेषु तान्त्रिकान् जिगाय। त्रयोदशे दृश्ये नेपालस्य पशुपतिमन्दिरे वामाचारबौद्धश्रमणान् पराजितवान्। तत्र कश्चन श्रमणो मारणमन्त्रमुच्चार्य शङ्करं भीषयितुमैच्छत्, किंतु तस्य मन्त्रास्तमेव ज्वालयितुं प्रारभन्त। नेपालराजेन कथितं—वस्तुतो भवान् दिग्विजयी शङ्करो वर्तते।

चतुर्दशे दृश्ये शङ्कर केदारनाथं जगाम। तत्र द्वात्रिंशद् वर्षाणां वयसि सम्पूर्णे स्वस्य परमात्मसायुज्यदिवसे प्रकृतजीवनरयोपलब्धी. प्रकटितवान्। भारतस्य चतुर्दिक्षु मया चत्वारो मठा संस्थापिता। यथा—द्वारकायां शारदामठ, पुर्यां गोवर्धनमठ., विष्णुप्रयागे ज्योतिर्मठ, रामेश्वरे च शृङ्गेरिमठ। तत्र मठेषु ऋग्यजुसामाथर्वणामध्ययनस्य विशिष्टा व्यवस्था विहिता।

## शिल्पम्

डा० रमा चौधुरी संस्कृते आधुनिकशैलीमधिकृत्य नाटकप्रणयने निष्णाता विद्यते, यद्यपि सा पाश्चात्त्यशैल्या समं भारतीयशैल्या नान्दीं, प्रस्तावनां, भरतवाक्यञ्चावश्यं योजयति। तस्या नाटकाना विभाजन दृश्येषु विलसति। पटपरिवर्तनमपि तत्र विद्यते। डा० सतकारी-मुखर्जी-महोदय शङ्करशङ्करस्य वैशिष्ट्यमाकलयन् कथयति—

But what has surprised me most is the wonderful ease and flow with which the present work represents to us the most obstruse philosophy of the great Advaitin Śankara Who could have even thought that any one would be able to serve the same under the guise of a Drama? But the supremely efficient and infinitely courageous Who could have thought her

capable of producing such a superb dramatic work on Śankara's holy life and teachings, in such a beautiful, poetic, enchanting easily intelligible language ? Further the numerous verses in different metres as well as songs add much to the great glory of this exhilarating work of great literary and other kinds of merits

## देशदीपम्

देशदीपे राष्ट्ररक्षाया दिवङ्गताना वीराणां स्मरणं कृतम् । अस्याभिनय' डा० यतीन्द्रविमल-चौधुरी-जन्मोत्सवे सम्पन्न ।

कस्मिश्चिद् ग्रामे ब्रह्मबल आराधनाभिधानया पत्न्या, चम्पकवदनेन पुत्रेण, पङ्कजनयनया च तनूजया सह वसति स्म । चम्पकवदन कलिकाताविश्वविद्यालयस्य छात्र आसीत् । अवकाशे स धनिकमित्रेण अभ्रप्रतिमेन सह ग्राम प्रति समागत । तदानीमेव भारतेन स्वरक्षायै युद्धं करणीयमवर्तत । तस्मिन् ग्रामे आकाशवाण्या समाचार प्राप्तो यद् देशस्य रक्षायै अधिकाधिक दान देयम् । सर्वेषा नराणा नारीणाञ्च तस्मिन् ग्रामे सभाहूता, यत्राभ्रप्रतिमेन विनम्रतया व्याख्यात यद् वयं स्वकीयां सर्वं देशरक्षायै समर्पयाम· । ग्रामवासिना रहीमेण ग्रामवासिन भावधाराया' परिचय एव प्रकाशायत्—

श्रेष्ठ व्रतं तत् खलु जीवनस्य, स्वदेशमातुर्नियतार्चन यत् ।
आलोकरेखा फलमम्बु वायुर्यस्या सदा रक्षति जीवन न· ॥
धन्य भवेदर्जनमर्पणेन दानेन धन्य ग्रहण हि लोके ।
यदर्जित जीवनमद्य मातुर्देय तदस्यै बहुमानपूर्वम् ॥

चम्पकवदनेनाभ्रप्रतिमेन च देशरक्षाया व्रत गृहीतम् । चम्पकवदनः पादचारी सैनिको भवितुं प्रातिष्ठत, अभ्रप्रतिमश्च वायुसेनायां सेवायै गत' । चम्पकवदनजननी एतस्मिन्नवसरे आशिषं प्राददात्—

सर्वोपरिष्टात् भव देशदीप आलोकधारा वितरात्र देशे ।
मार्गच्युतो द्रक्ष्यति येन मार्गं जनिष्यते येन च विश्वमिद्धम् ॥

पञ्चमे दृश्ये विपुलविक्रमो नाम लम्पटधनिक' पङ्कजनयनाया विवाहार्थी भूत्वा तस्या गृहमागच्छत् । आराधनया कथितम्—अस्माक-

मेष कुलाचारो वर्तते यत्कन्या समवयस्काय वराय दीयते। अस्माक सरला कन्या भवतामननुरूपा। सा हि देशभक्ता, भवाश्च तद्विपरीत.। विपुलविक्रमोऽतिशय चुक्रोध।

षष्ठे दृश्ये पकजनयना युद्धक्षेत्र प्रविशति। पुत्रस्तु प्रागेव रणभूमौ वर्तते स्म। मातापितरौ हृदय प्रस्तरीकृत्य तामपि क्षतसैनिकाना शुश्रूषायै प्रेषितवन्तौ। तदानीमेव विपुलविक्रम पुनरायात। पकजनयना तमब्रवीत्—मया तु युद्धभूमौ क्षतसैनिकाना सेवायै गम्यते।

सप्तमदृश्ये कुक्कुट-पेचकनामानौ द्वौ वञ्चकौ गलित मत्स्य-फलानि विक्रीणीत। तेषा वञ्चनाधौर्त्यं सम्मार्जिका विवृणोति।

अष्टमे दृश्ये हिमाञ्चलीय प्रत्यन्तदेशे युद्धभूमौ चम्पकवदन' सन्नद्धो वर्तते। तस्य सविधे कोऽपि कुटिलो गुप्तचरो भ्रान्तमार्गो भूत्वा तस्य सेना सन्निवेशे शरणमिच्छन् समागत। अथ कालान्तरे रहस्यवेदी सन् यदा स पलायितुमैच्छत्, तदा पकजनयनस्त बन्दिन कर्तुं प्रायतत। गुप्तचरस्तद् दृष्ट्वा "पिष्टलाद्" गुलिका चालयति स्म। चम्पकसखा जहाँगीर. मित्रस्य रक्षा कृतवान्। गुप्तचरो हत'। एतस्मिन्नेव कालेऽभ्रप्रतिमस्तस्य सन्निधौ वायुयानेन समायात.। सर्वे सानन्दममिलन्।

नवमे दृश्ये चम्पकवदनस्य जन्मदिवसस्य घटना विद्यते। स स्व ग्रामकुटीर स्मरति स्म। अस्मिन् दिने स किमपि विशिष्ट कर्तुमियेष। स मातृभूमेर्गौरवपताकाम् उल्लासयितुं समीहते स्म। अनतिदूरे घोर युद्ध प्रारब्धमासीत्। स समक्षमेव भारतध्वज स्थापितवान्, वन्दे मातरमिति गीतञ्चागायत्। तदानीमेव चम्पकवदनः शत्रोश्शस्त्रेण विक्षतो जहाँगीरमाह्वयत्। स चिकित्सालय नीतः। तत्र सोऽब्रवीत्—

"अस्त गच्छति मम जीवनसूर्योऽपि, परन्तु कदापि नास्त गमिष्यति भारतमातुर्महागौरवच्छवि.। अभ्रप्रतिमः पङ्कजनयनापि तत्रागतौ। पङ्कजनयनयोक्तम्।

न पार्थिवो जात्वसि पङ्कजस्त्व त्व पारिजात. सुरलोकजात.।
देशस्य चेत'सरसि प्ररूढपयोजवस्तिष्ठ चिरप्रकाशः॥

चम्पकेनोक्तम्—जनन्यै निवेद्यता यत्तव देशदीपः सार्थको जातः।

डा० रमया नाटकेऽस्मिन् ग्रामपरिसर. कार्यस्थली निर्वाचित

इत्यस्य प्रमुखं वैशिष्ट्यम्। रंगमञ्चे 'ओयाक् थु' थु 'इत्यादेरपेक्षा व्यञ्जनयैतस्य प्रकाशन सुष्ठु भवेत्। गीतराशेर्माञ्जुलता समग्रे नाटके विलसति। देशभक्तिसौष्ठवञ्चास्य प्रेरणास्पदम्।

## पल्लीकमलम्

पल्लीकमल नवदृश्यात्मक नाटक विद्यते। अस्मिन नायकस्य रूपकुमारस्य नायिकाया कमलकलिकायाश्च प्रेम्ण परिणति परिणये भवति।

मधुमालतीपल्ल्या कन्या कमलकलिका प्रकृतिसुषुमायामात्मविस्मृतेव सुप्रसन्ना विद्यते। सोषसं आनन्दमालिकेति अमृतकलिकेति वर्णयति। नदी तस्या. कृते मायाविनी विद्यते। तस्या मात्रे तरङ्गिण्यै तस्या इद काव्यमय जीवन न रोचते। सा ता भर्त्सयति। गृहपतिर्ब्रह्मबल कन्याया रोदनं श्रुत्वा पृच्छति—कस्मान्मम दुहिता रोदिति? तरङ्गिणी तमब्रवीत्—कुतस्ते दुहिता? केयमासादिता? मातापित्रोरीदृश वाक्य श्रुत्वा कमलकलिका आत्मनो विषये शङ्काकुला सवृत्ता। अथ सा नदीतीरमासाद्येमानेव प्रश्नान् पुन' पुनश्चिन्तयामास। तदानीमेव तस्या सखी काञ्चनकलिका तामुपालभत यत् त्वया कस्मादद्यावधि स्वविवाहवृत्तान्तो न निवेदित'। कमलकलिकयोक्तम्—अहमेतस्मिन् विषये किमपि न जानामि। तत काञ्चनकलिका स्नानाय शाटीमानेतु गृह गता। कमलकलिकाया शाटी वायुवेगान्नद्या निपतिता। तदापि सा ता नदी तुष्टाव—

कलकलकलना हिमगिरिललना ललति ललिता लोभना।
विलुलितचलना विकम्पितवलना ललाटाभरणशोभना॥

किञ्चित्कालानन्तर नायको रूपकुमारो नौका-सङ्गीत गायन् तस्याश्शाटी गृहीत्वा तत्रागत'। प्रथमदर्शन एव कमलकलिका तस्यैव समर्जान। पुनर्मिलनमाकाङ्क्षन्ती कमलकलिका सोऽब्रवीत्—परश्वःपूर्णिमायामर्धरात्रे मम मयूखमालिकानौकाया जन्मोत्सवो विद्यते। तदा भवत्यागम्यताम्।

तृतीयदृश्ये कमककलिकावोचत् पितरौ—मम विवाहो न केनापि करणीय इति। अह भवतोश्चरणसेवा कुर्वाणा जीवन यापयिष्यामि। तरङ्गिण्या कथित—तव वरस्तु भूम्यधिकारी राजा वर्तते। कलिकाताया

तस्य प्रासादा विलसन्ति। तथापि स त्वादृशया पल्लीबालया सह परिणयायसमुत्सुको वर्तते। कनककलिकया तन्निषिद्धम्।

एकस्मिन् दिवसे भूम्यधिकारी मार्तण्डमहोदय कन्या द्रष्टुमागत। तस्य पितु प्रभञ्जनस्य कृते वेत्रासनाभावात् स प्रभञ्जनायते स्म। अन्ते मार्तण्डेच्छया सर्वे शान्ता अभूवन्। कनककलिका समक्षमागता। प्रभञ्जनवचनात् सा गानमारभत—

विभुपदवहना दुष्कृतदहना नमामि जननीं पल्लीम्।
धनवनगहना परमतमहना विकसितकुन्दकमल्लीम्॥ इत्यादि।

अथ कन्या सुयोग्या विलोक्य ते विवाहदिवसस्य निश्चयं कर्तुमारेभिरे। कन्यायाः मनोभाव जानान पिताब्रवीत्—कन्यायाः सम्मत्यर्थं कञ्चित् कालमहमपेक्षे।

चतुर्थदृश्ये कृष्णाय प्रमत्ता राधेव कनककलिका रूपकुमारस्य सङ्गीतक श्रुत्वा मध्यरात्रे नदीमाससाद। सा रूपकुमारस्य पुरतः प्रस्तावयति यत्त्वया सह नौकाविहारोऽस्य निशीथस्य सर्वोपरि वरेण्यं सुखमास्ते। तौ नौकाविहाराय प्रातिष्ठेताम्। कनककलिका स्वकीयं जीवन तदा सार्थकममन्यत।

रूपकुमारेण स्वपरिचयो दत्त—यदाह वयसा सप्तवर्षीय आसम्, तदैकस्या शारद्या पूर्णिमायामस्या एव नौकाया उपरि आत्मानमेकाकिनमपश्यम्। तत प्रभृतीयमेव मम सर्वस्वम्। अस्मिन्नेव दिनेऽह नौकाया जन्मतिथि मानयामि। अहं प्रातरारभ्यार्धरात्र यावन् मनोमानुष प्राणबन्धु प्राप्तुं भ्रमामि। स प्राणबन्धुरेव ममात्मा, अन्तर्देवता, प्राणा, देह, जीवनञ्च विद्यते। कनककलिकोवाच—अहमपि तमेव त्वया सहान्विष्यामि। रूपकुमार तस्या प्रार्थना न स्वीचकार। ता पल्लीघट्टेऽवतारयत्। तत्रैव निशीथे मार्तण्ड कनककलिकामवलोकयत्। अथ चाभर्त्सयत्—अह जानामि यत् किंनिमित्त विवाह नेच्छसि। मम वाग्दत्ता भूत्वापि त्व स्वैरिणी वर्तसे। कनककलिका त निराशं परित्यज्य गता।

षष्ठे दृश्ये कर्कट-मर्कटौ हास्य प्रस्तुत।

सप्तमे दृश्ये मार्तण्ड कनककलिका हस्तगता कर्तुं कुचक्र चालयति।

स एकदा त्वया करो न दत्त इति ब्रह्मपद वन्दिनमकरोत्। ब्रह्मपदेन मनसि चिन्तितम्।

मा मेषशाव भृशमेष दष्टु फणा समुन्नाम्यति कालसर्पं।
तस्य प्रकोपोपशमे समर्थं प्रेक्षे न कञ्चिद् विषवैद्यमद्य॥

कनककलिका स्वकीयां रत्नमाला प्रदाय पितर मोचयितु प्रायतत।

अष्टमाङ्के कनककलिकाया जन्मरहस्यस्योद्‌घाटन भवति। वन्दी ब्रह्मपदो मार्तण्डस्य सविधे नीत। तत्र ब्रह्मपदेनोक्त—करस्तु मया प्रागेव प्रदत्त। परतु यदि भवता मतेन न प्रदत्तो मया, तर्हि मम कन्याया इमा रत्नमाला बन्धकरूपेण ध्रियता भवद्भि'। ता माला दृष्ट्वा प्रभञ्जन किमपि स्मृतवान्। अथ चापृच्छत्—कुत इय रत्नमाला समासादिता त्वया। ब्रह्मपदोऽब्रवीत्—इद रहस्य न प्रकटयितु गृहीत-शपथोऽस्म्यहम्। परन्तु स बाध्य सन्नब्रवीत—कनककलिका मया रत्न-मालया सम सद्योजाता कन्यारूपेण नदीतटे समासादिता। ततो मम पत्नी ता पुपोष। सम्प्रतीय मम जीवनधारा विद्यते।

प्रभञ्जनेन स्मृतम्—इय ममैव कन्या। कनकचम्पादेवी ता प्रासूत। मम सन्देहादस्या जननीमा नदीसविधे व्यसृजत्।

नवमदृश्ये सन्ध्यासमये मायाविनीतटे कनककलिका रूपकुमारा-गमनमालोकते। स गीत गायन्नागच्छत्। आगत्य तेन कथितम् राजकन्ये! अद्य पल्लीं व्यक्त्वाह गमिष्यामि। कनककलिकया कथितम्—अहमपि त्वया सह चलिष्यामि। रूपकुमारेणोक्तम्—मया दरिद्रेण सार्धम्? कनककलिकावोचत्—भवतो गृहे नित्यं प्राणबन्धु, मनो-मानुषो वसति। तव कस्याभाव? तत उभावेकरूपताङ्गतौ।

नाटकेऽस्मिन् कतिपयबग लोक्तीनां संस्कृतानुवाद' समुपलभ्यते। यथा—

(१) आकाशचन्द्र' पतित' करे मे।

(२) कुक्षौ क्षुधा मुखे लज्जा।

(३) पथि ठक्कुर आद्रियमाणो मरतकमारोहति।

यद्यप्यस्य रूपकस्य सर्वाणि दृश्यान्येकोक्तिमण्डितानि सन्ति, किं तु पञ्चमाङ्कस्य कनककलिकाया एकोक्तौ महती प्रभविष्णुता जागर्ति।

लेखिकाया मतेन प्रहसनमपि नाटके तथावश्यकं यथा सङ्गीत-निबन्धनम् ।

पूर्वकथा चलचित्रानुवर्तनपूर्वक पटपरिवर्तनद्वारा पूर्वदृश्ये प्रदर्शिता। कनककलिकाया जन्मरहस्यमपि पटपरिवर्तनपूर्वक दर्शितम् ।

## कविकुलकोकिलम्

नाटकेऽस्मिन् कविकुलकोकिले दश दृश्यानि विलसन्ति । १९६० ईसवीये उज्जयिन्या कालिदाससमारोहे नाटकस्यास्याभिनयेन स्वर्ण-कलशस्य पुरस्कार उपलब्ध. ।

### कथावस्तु

उज्जयिन्या समीपे पौण्ड्राभिधाने ग्रामे कालिदास उपद्रवै प्रसिद्धोऽस्ति । तस्य पिता प्रात' काले उषोवन्दना कृत्वा करतलवादनपुर सर कालिदास नृत्यन्त व्यवलोकयत् । पित्रा पृष्ट सोऽब्रवीत्—ग्रामसीमाया: कोणे विद्यमाने लघुसरसि शतदलकमल विकसितम्, तस्मान्नृत्यामि । पितुर्मतेनात्र प्रसन्नताया न किमपि विशिष्ट कारणमासीत् । तदानीमेव कालिदासस्याध्यापकास्त क्रोशन्तस्तस्य पितु' पार्श्वे समागत्य तस्योद्दण्डता न्यवेदयन् । अथ च तै कथित—भवत पुत्र' सस्थातो निष्कासित' यतो हि स सस्थाया दुष्टतमो मूर्खतमोऽयोग्यतमश्च छात्रोऽस्ति । अथ कालिदासोऽब्रवीत्—एतेषामध्यापनेन ,मम कर्णौ दग्धप्रायौ भवत । नाह ताडनशीलेभ्योऽध्यापकेभ्य' पठिष्यामि । पित्रा कथितम्—अत' पश्चात्ते मुख न दिदृक्षामि । ततस्तस्य स्नेहमयी जननी त स्वसविधे नीतवती ।

द्वितीयदृश्ये कालिदास. काली परिहसति । पाठशाला कारागारमिति कथयति । अत पश्चाद् अध्यापकस्य हस्तगतो न भविष्यामीति प्रति-जानीते । अथ तस्य जनन्यागत्य पृष्ट—सूर्यातपे कस्मात् स्थीयते ? कालिदासोऽवादीत्—विद्यालय गमिष्यामि । अह प्रकृतिजनन्या वनविद्यालये पठिष्यामि । तत्र प्राकृतिका विषया रसमया रमणीया रोमाञ्चकाश्च सन्ति । अत पश्चाद् द्वौ महाशयौ समागत्य कालिदासकृत पुष्पफलचौर्यं तस्य जनकाय निवेदितवन्तौ । पिता तौ क्षमामयाचत । कालिदासेनोक्तम्—एतेन किम् ? नाह पश्चात्तपामि । ताभ्यां चौर

कालिदास इत्यभिहितम्। ततस्तेन कथितम्—युवामेव चौरौ, यौ प्रकृतिमातु सम्पत्ति स्वकीया मन्येथे। तत्र तु सर्वेषा समानाधिकार'।

एकस्मिन् दिवसे कालिदासमात्रा कथितम्—गृहे भोज्य न विद्यते। कालिदासो वन गतवान्। तत्र स काष्ठविक्रेतारमपश्यद्, यः प्रतिदिन विपिने काष्ठ सगृह्य नगरे विक्रीणाति स्म। कालिदासस्तादृशीमेव जीविकामात्मने निश्चितवान्। ततस्तस्यैव काष्ठविक्रेतु कुठार गृहीत्वा काष्ठ सगृह्य शयित। तत्र द्वौ जनौ वनविहारार्थमागतौ। भोजनपाचनाय तौ काष्ठसञ्चयार्थ तत्रैव समायातौ। तत तौ कालिदास विगतनिद्र विधाय तं धिक्चक्रतुर्यत्पण्डितसूनुस्त्व काष्ठहरोऽसि सवृत्तः। ततस्ताभ्या परिहासे सोऽभिहित—दरिद्रतादूरीकरणाय गौडाधिपते कन्या विद्यावती स्वयवरे प्राप्नुहीति।

चतुर्थदृश्ये विद्यावतीस्वयवरे पराजिता पण्डिता परा लज्जामनुभवन्ति। तस्ते मूर्खश्रेष्ठस्यान्वेषण प्रारभन्ते।

पञ्चमदृश्ये कृत्तप्राया वृक्षशाखामधिरुह्य तस्या कर्तने संलग्न कालिदास विलोक्य ते प्रसन्ना भवन्ति।

षष्ठे दृश्येऽङ्गुलिनिर्देशपुरःसरे शास्त्रार्थे विजयी कालिदासो राजकन्याया विद्यावत्या पाणि गृह्णाति। सप्तमदृश्ये रात्रौ स वासकगृहे विद्यावती पश्यति। विद्यावत्या निवेदित—रमणीयेऽस्मिन् निशीथे सकथा भवेत्। कालिदासो मनसि सचुकोच। मनसा पुन पुन' सरस्वत्या स्तुति कृतवान्—'देवि सरस्वति! देवि भारति! आविर्भव मम रसनायाम्। मुहूर्तमात्रमपि आविर्भव, आविर्भव। रक्ष मा, रक्ष मामिति।" राजदुहित्रा पुन' पुन प्रेरितोऽपि स मौन कलितवान्। अथ तदानीमेवोष्ट्रध्वनि. श्रुत। कस्याय ध्वनिरिति विद्यावत्या पृष्टः स 'उट्र" इत्युवाच। तच्छ्रुत्वा सा भृश मनसि सन्तापमन्वभवत्। ततो विद्यावती तं मूर्खतममाकलय्य धूर्तादि वदन्ती स्वभाग्यमुपालभत।

कि न करोति विधिर्यदि रुष्ट कि न करोति स एव हि तुष्ट।
उट्रे लुम्पति र वा ष वा तस्मै दत्ता विपुलनितम्बा॥ ७ ५२

अनन्तर सा नेहागन्तव्य कदापि। न दर्शनीय त्वया मुखमित्याद्युवाच।

अष्टमे दृश्ये कालिदास' सरस्वत्या' स्तुतेरनन्तर तस्या दर्शन प्राप्तवान्। सरस्वत्या कथितम्—त्वमस्मिन् कुण्डे त्रिवार निमज्ज्याव-लोकय कि दृश्यते। कालिदासो यान्युत्पलानि तत्रोपलब्धवान् तैरेव स देवीमानर्च। 'त्व कविकुलकोकिलो भूया' इत्याशीर्वाग्देवतया तस्मै प्रदत्ता।

नवमे दृश्ये कालिदासो महाकविर्भवति। तत स विद्यावत्या राज-प्रासादमगच्छत्। विद्यावत्यपि स्वकार्य शुशोच। कालिदासस्तस्या द्वार हस्तेन उद्घाटयत्। विद्यावती कालिदासस्य स्वरमभिज्ञाय "अस्ति कश्चिद् वाग्विशेप" इति श्रुत्वा प्रसन्नताया पर पार गता। तदा सात्मान कृतार्थमन्वभवत्।

दशमदृश्ये महाकवि· सम्राजो विक्रमादित्यस्य सभाया स्वकीय काव्यकौशल प्रदर्शयति। तत्र विदुषा सम्मत्या स सम्राजा 'कविसार्व-भौम' इत्युपाधि प्राप्तवान्। तत पर महाकवि विक्रमादित्यस्य नवरत्नेषु सम्मानित। सभाया कालिदास इद सिद्ध कृतवान्, यत् काव्यमेव श्रेष्ठ शास्त्रम्। काव्यमेव जीवनस्य श्रेष्ठ सत्यम्। अन्येषा शास्त्राणा महत्त्वमनन्तर राजते।

## शिल्पम्

कविकुलकोकिले भावुकतापूर्णानामेकोक्तीनामाधिक्य राजते। तृतीय-दृश्यस्य कालिदासस्यैकोक्तौ प्रकृत्या सह भव्य सामञ्जस्य विलसति। कालिदासस्य आधुनिकी रीतिरप्यस्मिन् वर्तते। कालिदासस्याध्यापक कृमिकीट कृकलास शठशृगाल-बर्बर-मर्कट गर्दभाद्यपशब्दान् प्रयुक्ते।

प्रस्तुतनाटकस्य प्रशसा प्रेक्षकाणा मुखैर्वर्तते—

It was an enjoyable play, full of witty dialogues as well as petty songs exquisitely sung.

B K Bhattacharya I A S Foreword of Kalidāsa Caritam P VII

## मेघमेदुरमेदनीयम्

प्रस्तुते नाटके मेघदूतस्य पूर्वोत्तरघटनाना सघटन विद्यते। इदम प कालिदासममारोहावसर उज्जयिन्यामभिनीतम्।

## कथावस्तु

हिमालये नूपुरनिक्वणाया सरित' समीपे एकाकिनी कनककलिका-नाम्नी यक्षकन्या नदीवन्दनानन्तर सखीं ललितलतिका मिलति। यक्षकन्या सरिदवगाहनस्य योजनां सख्या' पुरत' प्रास्तावयत्। ललितलतिकया निवेदित—क्रूरा, कुटिला, कराला नदी न विश्वासयोग्या भवतीति। कनककलिका सखीमतमवहेल्य यावन्नद्या स्नातुमवतरति तावदेव निमज्जन्ती त्राहि त्राहीत्युवाच। जलविहाराय समागतो यक्षोऽरुणकिरणस्ता निमज्जन्तीमुद्धार।

द्वितीये दृश्ये कमलकलिकारुणकिरणस्य ध्याने निमग्ना वर्तते। अरुणकिरणोऽपि तस्या ध्यान उद्भ्रान्तो भवति। द्वावपि मिलने सति सौहार्दवार्ता कुरुत'। अस्मिन्नेवान्तराले कुबेरस्य निकटवर्ती प्रचण्ड-प्रतापो नाम यक्ष तत्रायाति। स कमलकलिकामात्मन प्रेमपाशे निबध्य विलासार्थमिच्छति। अरुणकिरणस्य कृते तस्याभद्रता सहनीया नासीत्। कनककलिका त धिक्करोति। तदारुणकिरणस्यापि तेन सम सघर्षो भवति। अन्ते न कनककलिकां परित्यक्ष्यामीति कथयित्वा प्रचण्डप्रतापो गत.।

तृतीयदृश्ये कनककलिकाया अपहरणेऽसफल: प्रचण्डप्रताप. तस्या पितु समीप गत्वा तां याचते। पित्रा कथित विवाहविषये तु कन्याया मन एव परम प्रमाणम्। अथ तदानीमेव यक्षदुहिता दयितेनारुण-किरणेन सहागता। प्रचण्डप्रतापाय घृणा प्रकटयामास। तत स गत। अरुणकिरणेन सह तस्या परिणयो निश्चित।

चतुर्थे दृश्ये प्रेमियुगल पूर्णिमारात्रौ निकुञ्जे मिलति। तयो. प्रेमनिशायां व्यावहारिक जगत् सत्ताविहीनमासीत्। अरुणकिरणेन तस्या निशि कुबेरस्य मायामदिरनामक तटाक रक्षितव्यमासीत्। स खलु प्रणयव्यापारे कार्यमिद कर्तु न शशाक। प्रचण्डप्रताप तत् कमलवन स्वहस्तिभि' भ्रशयामास। अग्रिमेऽह्नि कुबेरस्यार्धाङ्गिणी कामपूजायै कमलाना विशेषोपहाराय कमलानि न प्राप्नोत्।

पञ्चमे दृश्ये राज्ञ कुबेरस्य समक्ष वादोऽय गत'। प्रेमोन्मादिने

अरुणकिरणाय प्रचण्डप्रतापस्य प्रयासेन वर्षं यावत् प्रेयसीतो दूरवासस्य दण्ड' प्रणीत' ।

षष्ठे दृश्ये यक्षो दयितामामन्त्र्य रामगिरिं गच्छति । सप्तमे दृश्येऽरुणकिरणो दूरवासस्य अष्टमे मासे आषाढस्य प्रथमदिवसे मेघमवलोक्य तद्द्वारा प्रियायै सन्देश प्रेषयति । अष्टमे दृश्ये कनककलिकाया विरह-वेदनायाश्चर्या विद्यते । यक्षसन्देशहरो मेघस्तस्यै दयितसन्देश प्रयच्छति । यक्षपत्नी पत्यु' सन्देशेन मोदते । नवमे दृश्ये यक्ष. पुनरलकापुरीमायाति । अथ तयोर्मिलन चिर भवति ।

## युगजीवनम्

दशदृश्ययुते युगजीवननाटके स्वामिनो रामकृष्णस्य दिव्य जीवनं चर्चितमस्ति । कालीमन्दिरे पौरोहित्य, भैरवीब्राह्मणी द्वारा तस्य तान्त्रिकदीक्षा, तोतापुरीद्वारा तस्याद्वैतवेदान्तस्य शिक्षा, सारदामणे. सार्धं तस्य दिव्य दाम्पत्यम् , नरेन्द्रनाथस्य (विवेकानन्दस्य) उपलब्धि , रामकृष्णस्य समाधि.—इत्येता अस्य नाटकस्य प्रमुखा घटना सन्ति । भारते शतश इदमभिनीतम् ।

## निवेदित-निवेदितम्

प्रस्तुते द्वादशदृश्यान्विते नाटके भगिन्या निवेदिताया जीवनस्य प्रमुखा घटना रूपायिता ।

## अभेदानन्दम्

अभेदानन्दनाटके रामकृष्णपरमहसस्य प्रमुखशिष्यस्य सम्पूर्णं जीवनचरितं द्वादशदृश्येषु विलसति । अस्य प्रकाशन प्राच्यवाणीत. १६७७ ईसवीयेऽभवत् ।

## रामचरितमानसम्

द्वादशदृश्ययुते रामचरितमानस-नाटके तुलसीदासस्य चरितगाथा वर्तते । तुलसीदासस्य पत्न्या सह प्रगाढं प्रेम, तस्या भर्त्सनया गृहत्यागः, तपस्यया भक्त्या च रामचन्द्रदर्शन, रामचरितमानसस्य रचना—इत्यादयोऽस्य रूपकस्य प्रमुखा घटना विद्यन्ते ।

## रसमय-रासमणिः

अष्टदृश्यात्मकेऽस्मिन्नाटके राज्या रासमणेरुज्ज्वला चरितगाथा विद्यते।

## चैतन्य-चैतन्यम्

चैतन्य-चैतन्ये पञ्च दृश्यानि सन्ति। अस्मिन् महाप्रभोश्चैतन्यस्य चारुचरितावली चित्रिता वर्तते। तस्याविर्भाव, बाललीला, दिग्विजयः, महासमाधिश्चास्य प्रमुखा घटना'।

## संसारामृतम्

ससारामृतस्य सप्त दृश्येषु केलिनाम्न्या· दरिद्रपरिवारस्य कन्याया विपत्तीना कथा वर्तने। मयूखनामा पुरुष· तस्या प्रवञ्चना करोति। अन्ते सा मयूरनामानमभीष्ट प्रियतम प्राप्नोति। समृद्धस्य मयूरस्य चारित्रिकदौर्बल्य ता भृश पीडयति, कि तु शनै शनै तस्य चरित्रस्य परिमार्जन भवति।

## नगरनूपुरम्

नगरनूपुरस्य दशदृश्येषु मेखलाभिधानाया अपूर्वसुन्दर्या गणिकाया गीतनृत्याभ्या समाजश्चमत्कृतो जायते। सा नित्य बहून् कार्याणि विद्युदिव सम्पादयति। अन्ते सावगच्छति यद् इय जीवनस्य व्यापृति व्यर्था। अत्र न कोऽपि सार। तत सा हरद्वार गत्वा महात्मन उपदेशेन जीवनस्य वास्तविक तत्त्व जानाति। पश्चात् सा सन्यासिनी भवति।

## भारतपथिकम्

पञ्चदृश्यसमन्विते भारतपथिके राज्ञो राममोहनरायस्य चरितगाथा विद्यते।

## कविकुलकमलम्

कविकुलकमले महाकवि-कालिदासस्य उत्तरकालिकी चरितगाथा वर्तते। अस्मिन्नष्टौ दृश्यानि विलसन्ति।

## भारताचार्यः

द्वादशदृश्यान्विते भारताचार्ये नाटके राष्ट्रपतेः सर्वपल्ल्युपाह्वस्य राधाकृष्णस्य पावनी चरितगाथा वर्तते। चरितनायकस्य दर्शन प्रति प्रवृत्तिः, दर्शनविद्वत्सु मूर्धन्यत्वम्, भारतशासनस्य राष्ट्रपतित्व, यशस्विता चास्य रूपकस्य प्रमुखा घटना सन्ति।

१६६६ ईसवीये राष्ट्रपतिभवने डा० रमाया निर्देशने नाटकमिद-मभिनीतम्। अस्य प्रेक्षकेषु चरितनायक स्वयमपि सकुटुम्बो विद्यमान आसीत्। राष्ट्रपतिना पुरस्काररूपेण १५०० रूप्यकाणा राशि प्राच्य-वाण्यै प्रदत्त।

## अग्निवीणानाटकम्

अग्निवीणानाटके बागलादेशस्य महाकवेर्नजरुलेस्लामस्य चरितगाथा वर्तते।

## गणदेवतानाटकम्

गणदेवतानाटक वगाना उपन्यासकारशिरोमणे' ताराशङ्कर-वन्द्यो-पाध्यायस्य जीवनचरितमुपजीवति।

## यतीन्द्रयतीन्द्रम्

डा० रमाया पतिर्यतीन्द्रो वस्तुतो यतीन्द्र एवासीत। तस्य मृत्युः १६६४ ईसवीये बभूव। १६६४ ईसवीये कवयित्र्या तस्य चारुचरित यतीन्द्रयतीन्द्र उपनिबद्धम्। उपरि प्रोक्त एवेसवीये वर्षे यतीन्द्रशिष्यैरिद नाटकमभिनीतम्।

## भारततातम्

भारततातस्य षडङ्केषु पूज्यस्य महात्मनो गान्धिन' पावन जीवन-वृत्तं समुल्लसति। हरिजनोद्धार, साम्प्रदायिकमिलनप्रचेष्टा, सुभाष-चन्द्रबोस देशबन्धुचितरञ्जनदासयोमिलाप, लवणसत्याग्रह नोवा-खाल्यभिज्ञा इत्येता अस्य प्रमुखघटना। अस्याभिनयो बापूशताब्दी-महोत्सवे भारतशासनस्य शिक्षामन्त्रालयस्य समाश्रये सम्पन्न'।

## प्रसन्नप्रसादम्

दशदृश्यात्मकेऽस्मिन्नाटके बगस्य विश्रुतगायकस्य श्रीरामप्रसादस्य जीवनस्य प्रमुखघटना सन्ति। गुरुप्रसादाद् रामप्रसादो जगदीश्वरी-मन्नपूर्णां साक्षात्कृतवान्। स प्रतिस्पर्धायाम् अजु गोस्वामिन जिगाय। महाराज कृष्णचन्द्रस्तमाद्रियते स्म। समाधौ रामप्रसादस्य मात्रा जगदीश्वर्या सह तादाम्यमभूत्। नाटकेऽस्मिन् रामप्रसादस्य रामप्रसादीति नाम प्रसिद्ध गीत सस्कृतेन समाविष्टम्।

उपर्युक्तविवेचनाद् डा० रमाया सम्बन्धे निम्नलिखिता प्रशस्ति-श्चरितार्था भवति—

The only lady dramatist, poet, ballet writer and drama-organiser etc of India and outside of great fame and universal approbation, Pioneer of Modern Sanskrit Drama Movement in India



# विंशशताब्दस्य अन्यानि नाटकानि

## गणेशपरिणयम्

गणेशपरिणयस्य रचयिता वाराणसीवास्तव्यो वैद्यनाथो वर्तते। 'व्यास' इत्यस्य वशोपाधि। बाल्यावस्थात एव कविकर्मणि नैपुण्याद् "बालकवि" रित्युपाधिनासौ समलङ्कृत।

गणेशसम्भव नाम काव्य कविना १६०२ ईसवीये विरचितम्। मिथिलाराजवशोद्भवेन श्रीजनेश्वरसिंहेन तत् पुरस्कृतम्। तेनैवो-त्साहितो व्यासो गणेशपरिणय नाम सप्ताङ्क नाटक प्रणीतवान्। अस्मिन् ब्रह्मणस्तनूजाभ्या सिद्धि-बुद्धिभ्या सह गणेशविवाहवृत्तान्तो विलसति। इद १६०४ ईसवीयाब्दे भारतीयमुद्रणालये (Indian Press) प्रकाशितम्। सूर्योदयपत्रिकाया पुन १६६३ ईसवीयाब्दमारभ्य १६६४ ईसवीयाब्द यावत् प्रकाशितेष्वङ्केष्विद प्रकाशितम्। अस्यैका प्रति-प्रयागविश्वविद्यालये वर्तते।

## पुष्पतनयराज्यारोहणम्

प्रस्तुनाटकस्य प्रणेता गोविन्दकविः जोशी वर्तते। पुष्पाञ्जलिनामकं वैष्णवस्तोत्रमपि कविना विरचितम्। अस्मिन् राजा पुष्पसेनोऽमरसेनं पराजयते। कलत्रशतस्यापि स्वामी राजा सन्तानाभावाद् दरिद्रः ब्राह्मणाना सेवा कुरुते। ब्राह्मणाना शुभाशिषा नृपति· नीलसेनकन्यां बालावती गान्धर्वविधिना परिणयति। अथ बालावत्यामापन्नसत्त्वाया राजा पुष्पसेन· पञ्चत्व गत·। राज्ञन्युपरते दुष्टबुद्धिर्मन्त्री राज्ञी हन्तु व्यवस्यति। सेनापतिस्त पापात् निषेधति। अथ बालावती मृत बाल प्रसूते। स गुरो सुधन्वनो हस्तस्पर्शेन सजीवो जायते। तत· स बालो वृद्धि गतो दुष्टबुद्धि मन्त्रिण हत्वा धर्मेण प्रजा पालयति।

नाटकेऽस्मिन् प्राकृतभाषा-बहिष्कारो वर्तते। अस्य प्रकाशनं १६०५ ईसवीये पुण्यनगरे सवृत्तम्। अस्य प्रतिर्गुरुकुलकागड़ी-पुस्तकालये समुपलभ्यते।

## वसन्तमित्रभाणः

प्रस्तुतभाणस्य रचयिता मङ्गलगिरिकृष्णद्वैपायनाचार्यो विद्यते। कविरयं विंशशतकस्य प्रथमचरणे विद्यमान आसीत्। कविना सस्कृतेन तेलगूभाषयाचानेका कृतय प्रणीता। श्रीकृष्णदानामृत नाटक, श्रीकृष्णचरित काव्य, हयग्रीवाष्टक नाम स्तोत्रञ्च तस्य सस्कृत-कृतयः। एकावलीराकापरिणयनाटक-पार्वतीपतिशनकानि तस्य तेलगू-भाषाकृतय सन्ति।

अस्मिन् भाणे मङ्गलगिरे स्वामिनो नृसिहस्य मन्दिरस्य देवदास्या माध्व्या अनुजा वेश्यावृत्तये दीक्षिता भवति। तदुत्सवे सम्मिलित प्रसन्नो विटो वारवीथीषु परिभ्रमन् नारी-नरै सम नगरव्यवहारस्य चर्चा करोति। भाणेऽस्मिन् विटाना श्रृङ्गारविजृम्भणेन समं समाजस्य तास्ता व्यवस्था प्रति आक्रोश सुव्यक्त। तासा परिस्थितीना विवेचन वर्तते यासु कुलाङ्गना अपि वारविलासिनीना वृत्तिमङ्गीकुर्वन्ति। कोकिलवाणीनाम्नी त्रयोदशवर्षीया कन्या द्वादशशतरूप्यकाणि गृहीत्वा तज्जनन्याष्टाशीतिवर्षीय वृद्धवराय प्रदत्ता। सा वाराङ्गना सजाता। काश्चन महिला पतिदुर्व्यवहारेण वारविलासिनीमार्ग स्वीकुर्वन्ति। विधवाविवाहमुपलक्ष्य कवि भृश निर्वेदति। कविमतेन चरित्रभ्रष्टा एव विधवाः पुनर्विवाहायाग्रेसरा भवन्ति।

अस्य भाणस्य प्रकाशन विजयनगरात् सम्पन्नम्। अस्य विस्तृत-परिचयः १९७४ ईसवीयाब्दीये The Mysore Orientalist नामकपत्रिकायां उपलभ्यते।

## वेङ्कटरमणार्यस्य नाटकानि

वेङ्कटरमणार्यो मैसूरप्रदेशस्य संस्कृतपाठशालायामाचार्योऽवर्तत। तस्य निवासस्थान चन्नरायनगरी बभूव। तेन कमलाविजय, जीवसञ्जीवन नाम रूपकद्वय प्रणीतम्। महामहोपाध्याय-गङ्गानाथझामहोदयेन तस्य विषये प्रोक्तम्—

It is a great consolaton to find among us such writers of Sanskrit His Poems bear true mark of the

true poet and bear testimony to his wonderful command over the language and its niceties,

जीवसजीवनीनाटके लेखको वेद-शास्त्रेषु समुदितानामायुर्वेदस्य तत्त्वाना समावेश कृतवान्। अस्य कथानायको जीवदेवोऽस्ति, य सर्वप्राणिषु वर्तते।

इद नाटक रचयित्रा १६३८ खिष्टाब्दे स्वयमेव प्रकाशितम्।

## मुकुटाभिषेकः

मुकुटाभिषेकस्य लेखक. श्वेतरण्य नारायणदीक्षितो मद्रासनगरे सस्कृतमहाविद्यालये प्रधानाचार्य आसीत्। स मूलत काञ्चीमधिवसति स्म। काञ्ची विहाय तञ्जौरे कावेरीतटे श्वेतरण्ये पुन. न्युवास। स काश्या बालुशास्त्रि-विश्वनाथशास्त्रिभ्या समधीतवान्, वेदेषु च पर पाण्डित्य लेभे। स्वयमपि सोमयाग कृतवान्। दीक्षितेनानेककाव्यानि विरचितानि। अनेके ग्रन्था प्रणीता। तेन सप्त कथा गद्ये निबद्धा।

मुकुटाभिषेके जार्जपञ्चमस्य दिल्ल्या राज्याभिषेकस्य कथा पञ्चाङ्केषु विलसति। अस्य प्रकाशन १६१२ ईसवीयाब्दे मद्रासत सवृत्तम्। अस्य प्रती रामनगरमहाराजपुस्तकालये समुपलभ्यते।

## वल्लीपरिणयम्

वल्लीपरिणस्य प्रणेता टी० ए० विश्वनाथमहाभागोऽस्ति।[1] नाटकस्यास्य पञ्चाङ्केषु किरातराजस्य कन्यकया वल्ल्या सह कार्त्तिकेयस्योद्वाहो वर्णित। अङ्का दृश्येषु विभक्ता. सन्ति। अत्र सवादेषु प्राकृतानामुपयोगो भारतीयनियमानुसारं विद्यते।

## नलविजयम्

नलविजयस्य रचयिता रामशास्त्री कर्णाटके चिराय विद्वन्मण्डलसनाथे मण्डिकलनाम्नि नगरे निवसति स्म। अस्य पिता वेङ्कटसुब्बार्य-सुधीमणिर्ब्रह्मवादी बभूव। असौ महाराजस्य कृष्णराजस्य सभापण्डित आसीत्। महाराजोऽमु महाविद्वत्पदे प्रतिष्ठापितवान्,

१ १९२१ तमेऽब्दे कुम्भकोणत प्रकाशितम्।

अस्य कृते गृहारामस्याग्रहारस्य च व्यवस्था चकार। कवि "महाराज-कालेज-महापाठशालायां प्रथमोपाध्यायपदे नियुक्त आसीत्।

नलविजय नाम नाटक रामशास्त्रिणा चरमावस्थाया प्रणीतम्। अस्य प्रथमाभिनय कपिलातीरे प्रतिष्ठितस्य श्रीकण्ठेश्वरस्य यात्राया समाप्तौ महाजनानां प्रीत्यर्थं सम्पन्न। दशाङ्कमिद नाटकं महानाटकम-प्युच्यते।

नाटकमिद १६१४ ईसवीये मैसूरत प्रकाशितम्। अस्य प्रति' प्रयागविश्वविद्यालयस्य पुस्तकालये वर्तते।

## वेङ्कटकृष्णस्य नाट्यसाहित्यम्

केरलीयविदुषो वेङ्कटकृष्ण-तम्पी-महोदयस्य जीवनावधि १८६० खिृष्टाब्दमारभ्य १६३८ खिृष्टाब्दपर्यन्त वर्तते। तम्पीमहोदय बी० ए० कक्षापर्यन्तमधीतवान्। ततोऽय त्रिवेन्द्रम्-सस्कृतकालेजे क्रमशोऽ-ध्यापक प्राचार्यश्च नियुक्त.। श्रीरामकृष्णचरित, ललिता, प्रतिक्रिया, वनज्योत्स्ना तथा धर्मस्य त्वरितागति.—इत्यस्य कृतय। कस्मिश्चिद पि रूपके प्रस्तावना भरतवाक्यञ्च न स्त। विष्कम्भक-प्रयोगो वर्तते। लेखकेन रचनासु भारतीय-योरोपीय-नाट्यपरम्परयोर्मिश्रण प्रकटीकृतम्। उपरि निर्दिष्टाना सर्वासा कृतीना प्रकाशन १६२४ ईसवीये वर्षे बभूव, प्रतयश्च प्रयागविश्वविद्यालयस्य पुस्तकालये वर्तन्ते।

## दुर्गाभ्युदयम्

दुर्गाभ्युदयस्य सप्ताङ्कस्य नाटकस्य प्रणेता छज्जूराम शास्त्री वर्तते। अस्य जन्म १६६५ ईसवीये कुरुक्षेत्रप्रदेशे करनालजनपदे बभूव। अस्य पिता मोक्षराम आसीत्। कर्मकाण्डप्रवणे कुटुम्बे पौराणिकादर्शानुरूपं छज्जूरामस्य विकास' समभवत्। अनेकेषु स्थानेषु सस्कृत-स्याध्यापन कुर्वन् शास्त्रिमहाभागो दिल्ल्या यमुनातटवर्तिनि गौरीशङ्कर-मन्दिरविद्यालये पाठयामास। स संस्कृतोन्नायकेषु वर्तते। सस्कृत-साहित्योपाख्यान नाम तस्य ग्रन्थ पुरातत्त्वज्ञानाय विजयते। साहित्य-शास्त्रीयमर्मोद्घाटनाय स साहित्यबिन्दु व्यरचयत्। अस्य सुलतान-चरित नाम महाकाव्यमपि विलसति।

शास्त्रिमहाभाग आशुकविरप्यासीत्। अत स "कविरत्नम्" इत्युपाधिना विभूषित । वयसा पञ्चविंशतिवर्षीय शास्त्री षड्दर्शन विषयकभाषणेन जगद्गुरुशङ्कराचार्यस्य मनो जग्राह। ततश्च "विद्या-सागर" इत्युपाधिञ्चावाप्तवान्।

प्रस्तुते दुर्गाभ्युदये देव्या सर्वातिशायिन्या· शक्तेर्नाटकानुसारि वर्णन विद्यते। अस्य प्रकाशन १६३१ ईसवीयाब्दे रचयित्रा स्वय कृतम्।

## सहस्रबुद्धेर्नाटकानि

धारवाडनिवासिना सहस्रबुद्धे महोदयेन अब्दुलमर्दननाटकं प्रतीकारनाटक च प्रणीते। उभयोर्नाटकयोश्छत्रपतिशिववीरस्य (शिवाजी) उपलब्धीना वर्णन विद्यते।

## कन्यादानम्

कन्यादानस्य प्रणेता माणिकपाटिलो वर्तते। अस्मिन्नेकाङ्के कृष्णा-कुमार्या· कर्मनिष्ठं चरित्र निरूपितम्।

## प्रकृतिसौन्दर्यम्

प्रकृतिसौन्दर्यस्य रचयिता मेधाव्रत शास्त्री संस्कृतस्य विशशत-कस्योच्चोन्नायकेषु गण्यते। असौ मूलतो गुर्जरो ब्राह्मणः। चिरकालाद् नासिकस्य सविधे 'येवला'–ग्रामे निवासिनि सनातनधर्म-परिवारे १८६३ ख्रिष्टाब्दे जन्म लेभे।

मेधाव्रतो दयानन्दस्वामिनो व्याख्यानमुपश्रुत्य आर्यसमाज प्रति प्रवृत्त। येवलाग्रामे स आर्यसमाज स्थापितवान्। तस्य भार्यापि तद्विचारवासिता बभूव। १६२३ ईसवीये स जगज्जीवनसन्यासी भूत्वा हरद्वाराय प्रातिष्ठत। तत्र नित्यानन्दो बभूव। ततो हिमालय-कन्दरायामन्तर्दधौ।

मेधाव्रतेन नैकाश्चरितग्रन्थाः, बहूनि लघुकाव्यानि च निर्मितानि। तस्य नाटकमेकमेव वर्तते प्रकृतिसौन्दर्यं नाम। षडङ्कस्यास्य काल्पनिके-

तिवृत्तस्य नाटकस्य राजा चन्द्रमौलि सुहृदा चन्द्रवर्मणा सार्धं विमानमारुह्य हिमालयस्य तपोवनेषु वसन्तादीनां षण्णामृतूना विजृम्भण दृष्ट्वा प्रहृष्ट सन् तत्तद् वर्णयति ।

## कामकन्दलम्

कामकन्दलस्य प्रणेता कृष्णपन्तो रत्नावली नाम गद्यकाव्यकलिका मन्दाक्रान्ताशतकञ्च प्रणीतवान् । कृष्णपन्तस्य जन्म एकोनविंशशतकस्य चरमे भागेऽभवत् ।

अङ्कत्रयसमन्विते कामकन्दले नाटके श्रीपतिशर्माभिधानो ब्राह्मण. प्रकामानगर्यां राज्ञ कामसेनप्रासादे द्वारस्थ सङ्गीत शुश्राव । अनन्तरं स राजान न्यवेदयद् यदस्मिन् सङ्गीते मृदङ्गवादकोऽङ्गुष्ठहीन आसीत् । सत्य परीक्ष्य राजा तस्मै पुरस्कार प्रदत्तवान् । श्रीपति तत्सर्व पुरस्कारप्राप्त धन नर्तक्यै कामकन्दलायै व्यसृजत् । एतस्माद् रुष्टो नरपति. कवि नगरान्नि'सारयामास ।

अनन्तर श्रीपतिर्विक्रमादित्याय पत्रमलिखत् । मया गुरुभ्यो धर्म., नरपतेरर्थ' प्रकाममुपलब्धौ । भवन्तो मह्य कामनामकं वर्ग वितरन्तु । विक्रमादित्यस्तस्याशय सम्यगवगत्य कामसेनं समरे विजित्य श्रीपतेरभीष्टां कामकन्दला नाम वारविलासिनीं तस्मै प्रदत्तवान् ।

अस्य प्रकाशन काव्यमञ्जूषाया चौखम्भा-सस्कृतग्रन्थमालाया: ७८ संख्याया १९६४ खिृष्टाब्दे समभवत् । अस्य प्रतिर्गुरुकुलकाङ्गडी-पुस्तकालये वर्तते ।

## रङ्गाचार्यस्य नाटकानि

श्रीशिवाजिविजयस्य नाटकस्य रचयिता रङ्गाचार्य देशभक्त आसीत् । द्व्यङ्केऽस्मिन्नाटके आगराया' कारागाराद् मिष्टान्नभाजनेऽन्तर्धाय शिवाजि. बहिर्गत इति कथा । अस्य प्रकाशन सस्कृत साहित्य-परिषत्पत्रिकाया १९३८ ईसवीयाब्देऽभवत् ।

हर्षबाणभट्टीय रङ्गाचार्येण बाणभट्टविरचित हर्षचरितमुपजीव्य विरचितम् । हर्षचरितस्यैव बहवो घटना अस्मिन् नाटके रूपायिता: ।

अस्य प्रकाशन कलिकाताया संस्कृतसाहित्यपत्रिकाया २१.६ सख्या-मारभ्य सवृत्तम् ।

## पाण्डित्यताण्डवितम्

पाण्डित्य-ताण्डवितस्य रचयिता काशी-हिन्दूविश्वविद्यालयस्य प्राध्यापको बटुकनाथशर्मा वाराणसीविद्वत्सु प्रसिद्ध आसीत् । शास्त्रिमहाभागो वाराणसीवास्तव्यस्य ईश्वरीप्रसादमिश्रस्य सूनुरासीत् । अस्योपनाम बालेन्द्र इत्यासीत् । वल्लवदूत, शतकसप्तकम्, कालिकाष्टकम्, आत्मनिवेदनशतकम्, सीतास्वयवरमहाकाव्य चास्य प्रसिद्धा रचना । प्रस्तुतरूपक तस्य एकमात्र प्रहसनम् । शर्ममहोदयेन भरतनाट्यशास्त्रस्य सशोधित सस्करणमपि प्रकाशितम् ।

प्रहसनेऽस्मिन् बलियावास्तव्यस्य हलधरमिश्रस्य शिष्यो दण्डधरमिश्रो लघुदण्ड दधानो महान् आचार्यो मूर्खपण्डितानां विजेता, सर्प इव मण्डूकेषु, समग्राया धरण्या भ्रमति । अस्य प्रथम प्रकाशन वल्लर्या समभवत् । द्वितीय सस्करण काश्या सूर्योदयपत्रिकाया १९७२ खिष्टाब्दस्यागस्तमासे बभूव ।

## देशस्वातन्त्र्य-समरकाले राष्ट्रधर्मः

प्रस्तुतैकाङ्कस्य रचयिता का० र० वैशम्पायनो वर्तते । असौ कान्हेजनपदस्य भालोदग्रामस्य माध्यमिकविद्यालयेऽध्यापक आसीत् । स वार्षिकस्नेहसम्मेलनस्यावसरे स्वकीये निर्देशनेऽस्याभिनय प्रयुक्तवान् ।

अस्मिन्नेकाङ्के देवालय गच्छन् कश्चन ब्राह्मणः पथि राष्ट्रसेवकं भर्त्सयति यत्त्व मा स्प्रष्टुमिच्छसीति । अथ स राष्ट्रसेवकस्य तर्कैः प्रभावित. त देवालय नयति ।

द्वितीये दृश्ये गोसेवकचार्वाकनिषेधकयो' विवादो जायते । ततो भाषाशुद्धिप्रचारकस्य समाजसुधारकस्य, साम्यवादिन स्त्रीस्वातन्त्र्यवादिनश्च परस्पर घोरः सघर्ष सञ्जायते । ततो ब्राह्मण-राष्ट्रसेवकौ मन्दिरादायातौ । तयोः प्रयत्नेन सर्वे ते राष्ट्रधर्मपालनाय तत्परा अभूवन् ।

अस्य प्रकाशन पूनात. शारदे १९७० ईसवीयाब्दस्य फरवरीमासेऽभवत् ।

## विक्रमाश्वत्थामीयम्

विक्रमाश्वत्थामीयस्य व्यायोगरूपकस्य रचयिता नारायणरावचिलकुरी बभूव। अयमनन्तपुरस्य प्रभुत्वकलाशालाया संस्कृतस्य कर्णाटकभाषायाश्च अध्यापकोऽवर्तत। अस्यभिनयः कलाशालाया अध्यक्षस्य कृष्णमार्यस्याज्ञानुसारमुत्सवदिवसे सम्पन्नः।

अस्मिन् रूपकेऽश्वत्थामा कृप-कृतवर्मभ्यां समं दुर्योधनमन्विष्यन् व्यथया विचेष्टमान भग्नोरु तमवलोकितवान्। पिपासया परिव्याकुल त जलमपाययत्। ततो दुर्योधनेन दुर्घटनाया अखिल वृत्त निवेदितम्। तच्छ्रुत्वा सक्रुद्धोश्वत्थामा पाण्डवाना वध भीमस्य च शिरश्छेद प्रतिज्ञातवान्। अर्धरात्रे सुप्ताना पक्षिणामुलूकद्वारा वधमवलोक्य तादृशीमेव पाण्डवाना वध निर्धारयति स्म। शिविरे शयानान् सर्वान् निहत्य भीमसदृशस्य कस्यचिद् वीरस्य शिरश्छित्वा दुर्योधनायादर्शयत्। दुर्योधन सन्तुष्टो मृत.। तत' कृपाचार्येण स्पष्टीकृत यन्नाय भीमस्य शिर इति। अनन्तरमश्वत्थामा पाण्डाना विनाशाय ब्रह्मशिरोऽस्त्र प्रयोजितवान्।

अस्य व्यायोगस्य प्रकाशनं १९३८ ईसवीये सवृत्तम्। अस्य प्रति. सागरविश्वविद्यालयस्य पुस्तकालये वर्तते।

## ऋद्धिनाथस्य नाटकानि

मिथिलाया शारदापुरे सकराढि-कुले ऋद्धिनाथस्य जन्म बभूव। अस्य पिता महामहोपाध्यो हर्षनाथशर्मासीत्।

ऋद्धिनाथ. साहित्याचार्यस्योपाधिमुपलभ्य महाराज्ञ्याः "महेश्वरलतामहाविद्यालये" प्राचार्य आसीत्। अत. पूर्व स लोहनाविद्यापीठे प्रधानाध्यापकोऽवर्तत। शशिकलापरिणय पूर्णकामञ्चेति नाटकद्वय कविना प्रणीतम्।

शशिकलापरिणयनाटके पञ्चांका. सन्ति। तत्र पौराणिककथानुसार शशिकलाया भक्तसुदर्शनेन सह विवाहस्य वर्णन वर्तते। अस्य रचना १९४१ खिष्टाब्दे सम्पन्ना। अस्याभिनय. मिथिलाधिप-कामेश्वरसिंहस्यानुजस्य यज्ञोपवीतावसरे संवृत्त.।

पूर्णकामे नाटके एक एवाङ्को विलसति। अस्य नायक' पूर्णकाम तपस्वी आसीत्। तस्य तपसो भीत इन्द्र तस्य तपोभङ्गाय काम, वसन्तम्, अप्सरसश्च न्ययुक्त। ते तस्य तपोभङ्ग कर्तु नाशक्नुवन्। तत इन्द्रस्तं मातलिद्वारा स्वर्ग समानयत्। स्वर्गे मन्दाकिन्यास्तटे स तपश्चकार। नारदेन सह समागत्य भगवान् विष्णुस्त वैकुण्ठमनयत्।

उपरिष्टान्निर्दिष्टयो रूपकयोः प्रकाशन दरभङ्गात क्रमश १९४७ खिष्टाब्दे १९६० खिष्टाब्दे च बभूव।

## विद्याधरशास्त्रिणो नाटकानि

विद्याधरशास्त्रिणो जन्म राजस्थानस्य चुरूनाम्नि नगर्या बभूव। अस्य पिता देवीप्रसादशास्त्री विद्यावाचस्पतिरासीत्। पितामहो हरदत्तशास्त्री स्वसमयस्य महानाचार्य आसीत्।

विद्याधरस्य प्रसिद्धानि नाटकानि सन्ति—कलिपलायन, पूर्णानन्द, दुर्बलबलञ्च।

कलिपलायने चत्वारोऽङ्कास्सन्ति। अस्मिन् कलिपरीक्षित्सबद्धा भागवती कथा प्रपञ्चिता।

पूर्णानन्दे पञ्चाङ्का वर्तन्ते। अस्मिन् लोकप्रचलिता भक्तशिरोमणे पूरनमलस्य कथा रूपकायिता। आधुनिका पतनोन्मुखा प्रणय-पद्धतिरस्मिन् चर्चिता।

दुर्बलबले चत्वारोऽङ्का विद्यन्ते। अस्मिन् चीनद्वारा तिब्बतस्यात्मसात्करणस्य वृत्तान्तोऽस्ति। अस्य कथानायक आनन्दकाश्यपनामा बौद्धोऽतिशयकर्मण्यो विद्यते।

## सुन्दरेशशर्मणो नाटकानि

सुन्दरेशस्य काव्यकला तञ्जौरे विलसिता। त्यागराजचरित-महाकाव्य, रामामृततरङ्गिणी, राघवगुणरत्नावली च रूपकव्यतिरिक्ता. सुन्दरेशस्य कृतय सन्ति। शृङ्गारशेखरभाण., प्रेमविजय नाम नाटकञ्चास्य रूपकद्वयम्। प्रेमविजयस्य प्रथमाभिनय. "संस्कृत एकेडमी—" द्वारा निष्पन्न.।

प्रेमविजयनाम्नो नाटकस्य कथावस्तु कल्पितं वर्तते। अस्य चरित-नायको हेमचन्द्र कविकुमार आसीत्। स मगधनृपतिना प्रतापरुद्रेण स्वाङ्गरक्षको नियुक्तः। वैदेहयुद्धे स युद्धकौशलेन राजान ररक्ष। प्रसन्नो राजा तस्मै रत्नकृपाण प्राददात्। दुर्मतिनामा सेनापतिस्तस्मै ततः प्रभृतीर्ष्यति स्म।

दुर्मतिर्वृषसेनद्वारा हेमचन्द्रमानाय्योपवने त हन्तुमैच्छत्, कि तु स तत्र सफलो नाभवत्। राजकुमारी तदा त हेमचन्द्रमवलोकितवती प्रेमपरवशा स तमुद्याने समाहूय वार्तालापमारेभे। दुर्मतिर्हेमचन्द्र-राजकुमार्यो वर्धमान प्रेम दृष्ट्वा राज्ञे निवेदयामास। एकदा कलहे हेमचन्द्र सेनापति जघान। ततो राजा तस्मै कारावासदण्ड विहितवान्। कालानन्तर राजा शत्रुराज्ञो विध्वसाय हेमचन्द्र प्रैषयत्। विजयिने तस्मै राजा स्वा दुहितर परिणीतवान्।

श्रृङ्गारशेखरभाणस्याभिनयो बृहदीश्वरस्य वसन्तोत्सवे समागताना नागरिकाणां परितोषाय समभवत्। अत्र श्रृङ्गारेण सम हास्यमुत्फुल्लति।

प्रेमविजयनाटक श्रृङ्गारशेखरभाणश्च रामनगरमहाराजस्य पुस्तकालये वर्तेते।

## श्रीकृष्णार्जुनविजयनाटकम्

प्रस्तुतनाटकस्य रचयिता वेङ्कटरामयज्वा वर्तते। अस्य पिता वैद्यनाथयज्वा, पितामहश्च सुब्रह्मण्ययज्वासीत्। नाटकव्यतिरिक्तम् अष्टप्रासरामायणमस्य कृतिर्वर्तते।

श्रीकृष्णार्जुनविजयनाटके दुर्योधन श्रीकृष्णार्जुनसख्यत्वाद् भीति-ग्रस्तः। तेन चार्वाकसहायतया गयनामा गन्धर्व तयो· सखित्वे भेदो-त्पादनाय प्रेषित। स किल यदा कृष्णो यमुनाया सूर्याञ्जलिदाने व्यापृत आसीत्, तदागत्य कृष्णस्याञ्जलौ ष्ठीवति स्म। कृष्णेन कथितमद्य साय-कालात् प्रागेन हनिष्यामि। गयो नामा गन्धर्व आत्मत्राणाय गन्धर्वाणा-मिन्द्रस्य ब्रह्मणश्शिवस्य च शरण गत। कोऽपि त रक्षितु नाश्वासयत्। तत· स युधिष्ठिरस्य शरण गत·। युधिष्ठिरस्तस्य भयस्य कारणमपृष्ट्वैव तस्य रक्षण स्वीकृतवान्। नारदो वृत्तान्तमिम कृष्णाय न्यवेदयत्।

बलरामेणोक्तम्—कोऽपि भवतु। गयस्तु हन्तव्य एव। बलराम कृष्ण-प्रमुखाणा यादवाना सेना, युधिष्ठिरभीमार्जुनादीना पाण्डवाना सेना च युद्धाय सम्मुखमायाते। ततो यावद् युद्ध प्रारभते, तावद् ब्रह्मा समागत्य गय पुरतश्चकार। पाण्डवयादवयो पुनरपि सौमनस्य सम्पन्नम्।

अस्य प्रकाशन १६४४ ईसवीयाब्दे पालघाटत सवृत्तम्। अस्य प्रति-लिपि सागरविश्वविद्यालयस्य पुस्तकालये वर्तते।

## मणिमञ्जूषा

श्री एस० के० रामनाथशास्त्री मणिमञ्जूषारूपकस्य लेखक.।[1] अत्र अष्टादशदृश्यानि सन्ति। आद्यन्त प्रभावोत्पादकानि गीतानि सन्ति। अपहारवर्मण साहसचरिताख्यान विद्यतेऽस्मिन् रूपके। रूपकस्यास्य उपजीव्यमस्ति दण्डिनो दशकुमारचरितम्।

## अलब्ध-कर्मीयम्

दक्षिणभारतीयोऽयं विद्वान् के० आर० नेयर अलवाय: अलब्ध कर्मीय-नाटकस्य लेखकोऽस्ति।[2] अत्र भावना, गैर्वाणी, यशोद्युम्ननाम पुरुष भिषग्वरादिका. चरितनायकाश्च सन्ति। कवि' अकर्मको नायकोऽस्ति। तस्य पत्नी भावना स्वपुत्रं काव्यकुमार मञ्चे निधाय आन्दोलयति, ललितलवङ्गलतायाश्च पद्धतौ गायति। तस्या पति. जीविका-प्राप्त्यर्थं यत्र तत्र भ्रमति। निराश एव स कवियोंधन-कर्मणि अपि नियुक्तिमाकाङ्क्षति। किं भवता कुत्रापि नियुक्तिर्लब्धेति सा पतिम-पृच्छत्। कविर्नैराश्य प्रकटयति। अस्मिन्नेवान्तराले दग्धग्रामस्य सस्कृत-पाठशाला-सञ्चालक आगच्छति। स तस्मै प्रतिमास पञ्चदश-रूपणा भृति प्रदातु समुद्यत।

## संस्कृत-वाग्विजयम्

सस्कृतवाग्विजयस्य प्रणेता प्रभुदत्तशास्त्री दिल्ल्या इम्पीरियल-बैङ्क-

---

१ सस्कृत साहित्य-पत्रिकायां १९४१ वर्षे प्रकाशितम्।

२. १९४२ ई० वर्षे त्रिवेन्द्रम्-नगरत' श्रीचित्रा-पत्रिकायायां प्रकाशितम्।

कॉलनी, दरीबा कलायां वसति ।[1] नाटकस्य पञ्चाङ्का अनेक दृश्येषु विभक्ताः सन्ति । अत्र सस्कृतेन सह हिन्दीभाषा प्राकृतभाषाया' स्थाने ऽस्ति सस्कृतस्य उच्चावचस्थितेरपि विश्लेषण विद्यते । अस्मिन्नाटके आधुनिक-भाषाणां साह्यम् आङ्गलभाषया वैपरीत्यञ्च प्रदर्शितम् । नाटकेऽस्मिन् विदूषको विदूषिका च हास्य सृजत' ।

## गुरुदक्षिणा

गुरुदक्षिणानाटकस्य प्रणेता श्रीनिवासरङ्गार्यो वर्तते । अस्य नाटकस्य त्रिष्वङ्केषु रघुवशस्य पञ्चमसर्गस्य वरतन्तो' शिष्यस्य कौत्सस्य कथा कतिपयैरभिनवसविधानै सह वर्णिता वर्तते । अस्मिन् व्याघात् कौत्सोऽवगच्छति यद् रघुणा सर्वा सम्पत्तिविश्वजिति यागेऽर्थिसात्कृता तदा तु कौत्स आत्महत्यायै उद्यत । सयोगान् मृगयार्थमटन् रघुस्तत्रैवायाति । रघु कुबेरस्य सहायतामैच्छत् । यदृच्छया नलकूबरेण सह कुबेरस्तत्रैवायात । कौत्सस्यावश्यकता पूर्णा भवति । कौत्सो निखिला दक्षिणां गुरवे समर्प्य शुभाशिषमाप्नोति ।

अस्य प्रकाशनममृतवाणीपत्रिकाया १६४६ ईसवीये सवृत्तम् ।

## विश्वेश्वरस्य नाटकानि

मुकुन्दलीलामृतनाटकस्य रचयितुर्विश्वेश्वर–दयालोश्चिकित्सक-चूडामणेर्निवासस्थान 'हरि-हरभवनं' वरालोकपुरे उत्तरप्रदेशस्य इटावा-जनपदे वर्तते । कविर्वैद्यसम्मेलनेषु वैद्यके निष्णातत्वादध्यक्ष आसीत् । सस्कृत प्रति जनाना मन्दादरत्व दृष्ट्वापि स सस्कृतलेखने मुद्रणे च बद्धपरिकरो वर्तते ।

विश्वेश्वरो भारतीय-स्वातन्त्र्यसेनानीना समर्थक, विदेशि–शासकाना विरोधको बभूव ।

---

१ १९४२ ई० वर्षे दिल्लीत प्रकाशितम् ।

२. पालघाटत १९४४ ई० प्रकाशितम् ।

सप्ताङ्कविलसितेऽस्मिन्नाटके देवकी वसुदेवयो परिणयादारभ्य कसवधपर्यन्त भागवतीयमुपाख्यान रूपकरूपेण समुपस्थापितम्। अस्य प्रकाशनमिटावात कविना स्वयमेव कृतम्।

विश्वेश्वरस्यापर रूपक हनुमन्नाटक वर्तते। अस्मिन् रामकथा पल्लविता। लेखकानुसार 'वर्तमानभारत न त्यजति सुसस्कृतिम्।" अस्यापि प्रकाशनमिटावात कविनैव कृतम्।

## महर्षिचरितामृतम्

प्रस्तुतनाटकस्य प्रणेता सत्यव्रतो "वेदविशारदो" वर्तते। अस्य जन्म गुर्जरप्रदेशस्य अमरेलीग्रामेऽभवत्।

मुम्बय्या आर्यविद्यासभया सञ्चालिते गुरुकुले वयसा चतुर्दश-वर्षीय. सत्यव्रतो मायाशङ्करस्याचार्यत्वेऽधीतवान्। ततो वैदिकधर्मस्य दीक्षा गृहीतवान्। १९२६ ख्रिष्टाब्दे 'वेदविशारद' इत्युपाधि लब्धवान्। तस्याधिकतम समय आर्यधर्मस्य प्रचारेऽध्यापने च व्यतीत।

महर्षिचरितामृतनाटकस्य पञ्चाङ्केषु क्रमश' शिवरात्र्युत्सव, महाभिनिष्क्रमण, गुरुदक्षिणा, पाखण्डखण्डन, मृत्युञ्जयत्वञ्च महर्षि-दयानन्दस्वामिविषयकाणि प्रकरणानि वर्तन्ते।

अस्य प्रकाशन १९६५ ईसवीये मुम्बयीत सञ्जातम्। अस्य प्रति. प्रयागस्य "गङ्गानाथझानुसन्धानकेन्द्रे" समुपलभ्यते।

## शिविवैभवम्

शिविवैभवस्य रचयितुर्जग्गू-शिंगरार्यस्य जन्म १९०२ ईसवीयाब्दे बभूव, मृत्युश्च १९६० ईसवीयाब्देऽभवत्। प्रस्तुतनाटकातिरिक्तमस्य पुरुषकारवैभव, अन्योक्तिमाला, ऋतुवर्णन, ग्रन्थिज्वरचरित, वेदान्त-विचारमाला, युवचरित चाप्रकाशिता कृतय. सन्ति।

शिविवैभवस्य प्रथमाङ्के शिवेर्देश विदेशयो' समादरस्य वर्णन-मस्ति। द्वितीयाङ्के मनोरञ्जकाना क्रीडानां चर्चा विद्यते। तृतीयाङ्के पालित कपोतद्वयमानीयते। कपोतयुगल राजा उड्डाययते। महाश्वेत-मेघोदयाभिधानयोः कपतयो क उच्चैरुड्डीयते इति महाराज्ञी

विलोकयति । तदा गगने श्येन कश्चिदागत्यैकं कपोतहृतवान् । राज-श्येनयोर्विवादो भवति । अत पर पौराणिकाख्यानेन तुल्यमेव कथानकं विलम्बितम् ।

## परिवर्तनम्

काशीहिन्दूविश्वविद्यालस्य धर्मशास्त्रविभागाध्यक्षतनूजस्य राधाप्रसादशास्त्रिण पुत्र कपिलदेवद्विवेदी परिवर्तन–नाटकस्य प्रणेता वर्तते । द्विवेदिमहाभाग आशास्तेस्म यत्स्वतन्त्रे भारते भारतीयसस्कृते पुनर्जागरण भविष्यति । किंतु स्वतन्त्रताप्राप्तौ तद्विपरीतमवलोक्य निराशाप्लुत प्रस्तुतनाटक स प्रणिनाय ।

रूपकेऽस्मिन् स्नेहलताभिधानाया॰ कन्याया॰ परिणये तस्या पिता शङ्कर स्वस्य सर्वस्व विक्रीय दशसहस्रेण कारयानं क्रीत्वा जामात्रे प्रयच्छति । अस्मिन् कर्मणि कन्याया पित्रा स्वकीयं गृह श्रेष्ठिहस्ते विक्रीतम् । गृहस्य कूप सोपानञ्च श्रेष्ठिने न दास्यामीति स पूर्वमेवाकथयत् परन्तु श्रेष्ठीलेखकायोत्कोच प्रदाय तद्द्वयमपि स्वनामतो लेखयतिस्म । तत शङ्कर स्वप्रयासेन पत्नी जीविकानिर्वाहायादिश्य मुम्बयी गत । तत्र प्रचुरं धनमर्जित्वा निवृत्तः । तत कूप श्रेष्ठिनोऽधिकारे दृष्ट्वा पत्नीं च तद्गृहपरिचारिकामवलोक्य सोऽभियोग न्यायालयेप्रावर्तयत् । तत्रापि श्रेष्ठिनो विजय आसन्न आसीत्, पर तु नभोवाणीप्रभावितो न्यायाधीशस्तमभियोग पञ्चायते निर्णयाय प्रैषयत् । तत्र तु मूलतो ज्ञातृभि॰ पञ्चायतसदस्यैर्निर्णय॰ शङ्करस्य पक्षे निष्पन्न ।

अस्य प्रकाशनं "लखनऊत॰" चतुर्थसस्करणे १९५६ ईसवीयाब्दे समभवत् ।

## वासुदेवद्विवेदिनो रूपकाणि

उत्तरप्रदेशस्य देवरिया-जनपदवास्तव्यो वासुदेवद्विवेदी समग्र जीवन सस्कृतप्रचाराय समर्पितवान् । द्विवेदिमहाभागेन स्थापित संस्कृतप्रचारकार्यालयो वाराणस्या वर्तते । तद्यथानामसस्कृतप्रचारे निरत॰ । तेन स्थापिते संस्कृतमहाविद्यालये सस्कृताध्यापनस्य सुष्ठु

व्यवस्था विद्यते। शास्त्रिमहोदयेन लघूनि एकाङ्करूपकाणि विरचितानि। इमानि सर्वाण्यपि रूपकाणि भारतीयचरित्रनिर्माणार्थं विलसन्ति। कौत्सस्य गुरुदक्षिणा, भोजराज्ये संस्कृतसाम्राज्य, स्वर्गीयसंस्कृतकविसम्मेलन, बालनाटक चास्य प्रसिद्धा कृतय। सर्वेषु रूपकेषु कवी रोचकसविधानाना सयोजन विधाय कथानक हृदयस्पर्शि व्यधात्।

## क्षमाशीलो युधिष्ठिरः

प्रस्तुतस्य लघुनाटकस्य प्रणेता ओऽम्प्रकाश-शास्त्री हरियाणाप्रदेशेऽध्यापको वर्तते। अस्य त्रिषु दृश्येषु युधिष्ठिरस्य विद्यार्थिजीवनस्य त्रीणि दृश्यानि सन्ति। आचार्यो द्रोणस्तमशिक्षयत्—सदा क्षमामाचरेत्। एकदा युधिष्ठिर पाठस्यानभ्यासाद् गुरुरताडयत्। कतिचिद्दिनान्यतीत्य युधिष्ठिरेण कथित—तस्मिन् दिनेऽह पाठस्य मनन कुर्वाण आसम्। तच्छ्रुत्वा द्रोणोऽब्रवीत्—

उपदेश प्रकुर्वाणा लभ्यन्ते बहवो नरा।
स्वयमाचारसम्पन्ना दुर्लभा भुवि मानवा'॥

अस्य प्रकाशन भारत्या ३ ६ अङ्के सवृत्तम्।

## अमर्षमहिमा

मैसूर-वास्तव्य के० तिरुवेङ्कटाचार्य अमर्षमहिमेतिरूपकस्य प्रणेतास्ति।[1] अस्मिन् एकाङ्के पञ्चदृश्यानि सन्ति। अत्र रामचन्द्रो नाम अधिकारी गृहे स्वादहीन भोजन दृष्ट्वा पत्न्या विवदमानोऽभुक्त्वैव कार्यालय गच्छति। तत्र स्व-सहायकेन चन्द्रशेखरेण सह कलहायते। चन्द्रशेखरोऽपि गृह गत्वा स्वपत्न्या सह विवदते। सापि स्व परिचारिकया सह कलहायते।

## सुदर्शनत्रिपाठिनः नाटकम्

उत्कल-वास्तव्य सुदर्शनत्रिपाठी सिंहलविजयस्य प्रणेतास्ति।[2] पञ्चाङ्केऽस्मिन्नाटके 'उडिया-गीताना' निर्भरता रोचते। अङ्का दृश्येषु

१ अमरवाण्या १९५१ तमे खीष्ट-वर्षे प्रकाशितम्।

२ सिंहलविजय १९५१ वर्षे बेरहामपुरतो प्रकाशितम्।

विभक्ता सन्ति। अत्र कलिङ्गाना सिहलविजयस्य पुरातनी कथा 'रूपकायिता।'

सुदर्शनत्रिपाठिनामरभारतीति रूपके सत्यवती-पराशरयो दाम्पत्येन द्वैपायनस्य जन्म, तस्य तप., वेद-ब्रह्मसूत्र पुराणाना साहित्य-सौधे प्रतिष्ठापन, कृष्णजन्म च वर्णितानि। अत्र प्रतिभा, प्राकृता, वेदादयश्च पात्राणि सन्ति। गीति-सौरभ राजते सर्वेष्वङ्केषु। अङ्काना विभाजन बहुषु लघुदृश्येषु वर्तते।'

## स्कन्दशङ्करखोतस्य नाटकानि

नागपुरस्य स्कन्दशकरखोतो मालाभविष्यम् लालावैद्यम्, हा हन्त शारदे चेति नाटकत्रयं प्रणीतवान्।[2]

१९५१ ई० वर्षे प्रणीते मालाभविष्ये लेखकेन प्रस्तावितम् "राशि-भविष्यं वितथ कल्पित कृत्रिमम्" चेति। मालाभविष्ये मुम्बईनगरस्य वैषम्यपूर्ण परिहासात्मक च चित्रण रुचिकर वर्तते। तत्र सवादाश्चटुला सन्ति। मालाचौर्य प्रधानघटना वर्तते।

मनोविनोदार्थं १९५५ ई० वर्षे प्रणीतस्य प्रहसनस्य लालावैद्यस्य कथावस्तु कतिपयवैद्यानधिकृत्य प्रवर्तते। निर्वहणे धूर्तो लालावैद्यो दण्डितो भवति।

१९५६ ई० वर्षे प्रणीत "हा हन्त शारदे" इति रूपक लेखकानुसार सामाजिक प्रहसनमस्ति। अनया रचनया लेखकः स्वर्णपुरस्कार लब्धवान्। अस्य कथावस्तु स्त्रीणामशिक्षया समुत्पन्नवैषम्यमधिकृत्य प्रवर्तते।

१९५२ ई० वर्षे प्रणीते ध्रुवावतारे बोधक (शिक्षक) ध्रुवप्रह्लादयो-श्चरितचर्चा प्रस्तौति। आदर्शो बालक' सुधीरो ध्रुवस्य नवावतार इति विख्याप्यते।

## नीर्पाजे भीमभट्टस्य नाटके

१९०३ खीष्टाब्दे समुत्पन्नस्य भीमभट्टस्य प्राथमिकशिक्षा कम्मेज-

---

१ अमरभारत्या प्रकाशन बेरहामपुरत. (गञ्जाम) मनोरमेति पत्रिकाया १८८५ शकाब्देऽभवत्।

२ लेखक. स्वयमेव स्वकीयनाटकाना प्रकाशक.।

संस्कृतपाठशालाया सजाता। दक्षिणकर्नाटकस्थ परेडालसंस्कृतमहाविद्यालये साहित्यशिरोमणिकक्षायाश्चतुर्थे वर्षे पठन्नसौ भीमभट्ट कश्मीरसंधानसमुद्यम विरचितवान्।

वारद्वयमभिनीतस्य कश्मीरसंधानसमुद्यमनाटकस्य प्रारम्भ. श्यामाचरणमुखर्जीमहोदयस्यैकोक्त्या भवति। कश्मीरविभाजनस्यानौचित्यप्रदर्शनमेवास्य लक्ष्य वर्तते। निर्वहणे नेहरु शेखयोर्निर्णयेन श्यामाप्रसाद. क्षुभितो भवति।[1]

हैदराबादविजय नीर्पाजेविरचित द्वितीय राजनीतिक नाटक वर्तते।[2] कतिपयदृश्येषु विभक्तेऽस्मिन् रूपके स्वतन्त्रताप्राप्तेरनन्तर हैदराबादविषयकषड्यन्त्र नेहरूपटेलप्रभृतिभिस्तन्निराकरण च कवि सोत्साह निरूपयति।

## सीताकल्याण-नाटकम्

वेङ्कटरामशास्त्रिणोऽस्मिन्नाटके रामजन्मत प्रभृति विवाहकाल यावत कथावस्तु प्रवर्तते।[3] अस्य पञ्चाङ्कनाटकस्यान्तिमेऽङ्केऽन्तर्नाटकमेक समाविष्टम्। तत्र वेदवत्या कथा रूपायिता।

वेङ्कटरामशास्त्रिणोऽस्मिन्नाटके रामजन्मत. प्रभृति विवाहकाल यावत् कथावस्तु प्रवर्तते।

## नपुंसकलिङ्गस्य मोक्षप्राप्तिः

श्रीसत्यव्रतशास्त्रिणोऽस्मिॅंल्लघुरूपके मुख्यतो नपुंसकस्य स्वकीयमहिमगान वर्तते।[4]

---

१. अमृतवाण्यां १९५२-५३ वर्षयो प्रकाशितम्।

२ अमृतवाण्यां प्रकाशितम्।

३ लेखकेन १९५३ ई० वर्षे प्रकाशितम्।

४. भारत्यां १९५३ खीष्टाब्दे प्रकाशितम्।

## प्रतारकस्य सौभाग्यम्

प्रतारकस्य सौभाग्यमिति लघुरूपके प्रतारकाणां व्यवसाय कथ सम्यक् प्रचलतीति दर्शितम्।[1] तेषा कुकृत्यैरतिखिन्नो दीनश्च राजेन्द्र. कथयति "दैवमपि साधूना प्रातिकूल्यमसाधूना चानुकूल्य विदधदिव प्रतिभाति"।

## सुरेन्द्रमोहनस्य नाटकानि

कलिकातावास्तव्य' सुरेन्द्रमोहनो बालोचितानि कतिपयलघु· नाटकानि विरचितवान्। तत्र वैद्यदुर्ग्रह., काञ्चनमाला, पञ्चकन्या, प्रजापते' पाठशाला, अशोककानने जानकी, वणिक्सुता चैते प्रसिद्धा'।[2]

## अन्धैरन्धस्य यष्टिः प्रदीयते

अस्य लघ्वेकाङ्कस्य प्रणेता बङ्गदेशस्य विद्वन्मनीषी डा० क्षितीश-चन्द्रचट्टोपाध्यायोऽस्ति। अस्य पिता शरच्चन्द्रो माता च गिरिबालादेवी आस्ताम्। डी० लिट्० उपाधिना विभूषितोऽय न केवल भारतीय-भाषास्वपितु आङ्गलजर्मन-फ्रेञ्चादिविभिन्नवैदेशिकभाषास्वपि निष्णातोऽ-नुसन्धानात्मकान् बहून् ग्रन्थान् प्रणीतवान्। कलिकातानगरीत· सुप्रसिद्धा [3]मञ्जूषानाम्नी पत्रिका क्षितीशस्य सम्पादकत्वे विलसिता।

"अन्धैरन्धस्य यष्टि· प्रदीयते" इति नाटके खल्वाटतामधिगच्छन् कश्चिन्महाराजो वाराणस्या मुकुन्दानन्दगोविन्दस्वामिन चिकित्सितु निवेदयति। तस्य चिकित्साविधानमनुसृत्य स तदर्थ ब्राह्मणभोजन-दक्षिणादिक सम्पादयितु निर्दिशति। किन्त्वन्ते "स्वयमेव सर्वथा खल्वाटोऽयम्" इति ज्ञात्वा राजा राजभवनात्त निस्सार्य कथयति—न खल्वन्धेनान्धस्य यष्टिप्रदान योग्यम्। कथ स्वयमेव खल्वाटोऽय मम खल्वाटता दूरीकरिष्यतीति।

---

१ मञ्जूषाया १९५५ ई० वर्षे प्रकाशितम्।

२. सुरेन्द्रमोहनस्य नाटकानि मञ्जूषाया प्रकाशितानि।

३. मञ्जूषायां १९५५ ई० वर्षे प्रकाशितम्।

## परिणामम्

परिणामन्नाम सप्ताङ्क-नाटक निर्मित चूडानाथभट्टाचार्येण ।[1] चूडानाथोऽय प्राचार्य आसीत् काठमाण्डू-शासकीयमहाविद्यालये । नाटकेऽस्मिन् योरपीय-सभ्यताया सस्कृतेश्च मृगमरीचिकाभि· पाशिताना नवयुवकयुवतीना पतनोन्मुख-प्रवृत्तयो वर्णिता ।

## रामानन्दम्

रामानन्दनाटकस्य लेखकोऽय बी० श्रीनिवासभाट उडुपि-नगरे सस्कृत-महाविद्यालयेऽध्यापक आसीत् । अस्मिन्नाटके पञ्चाङ्का सन्ति । अङ्का दृश्येषु विभक्ता सन्ति । नाटकेऽस्मिन् उत्तररामचरितस्य कथावस्तु वर्तते ।[2]

## छायाशाकुन्तलम्

जीवनलालपारिखस्य छायाशाकुन्तलमिति रूपक उत्तररामचरितस्य तृतीयमङ्कमनुसृत्य प्रणीतम् ।[3] अत्र तिरस्करिण्या प्रभावेण शकुन्तला छायारूपेणोपस्थाप्यते ।

## आदिकविः

आदिकवे प्रणेता बुद्धदेवपाण्डेय पाटलिपुत्रस्य मीठापुरस्य दयानन्दकन्याविद्यालयस्याध्यापकोऽस्ति ।[4] प्रकृतनाटके वाल्मीकिः पापवर्तन विहाय दीक्षा गृह्णाति । पश्चात् क्रौञ्चवधस्य कथा वर्तते ।

## प्रतीकारम्

प्रतीकार-प्रणेता दिल्ली-विश्वविद्यालये प्रवाचक शिञ्जारवस्य रचयिता कृष्णलालो वर्तते ।[5] नाटकस्य कथानुसारमष्टावक्रनामा विद्वान्

१. श्रीमती नूतनश्री ८।१५ रयूखटोल, काठमाण्डू नेपालत प्रकाशितम् ।

२. लेखकेन स्वयमेव १९५५ वर्षे प्रकाशितम् ।

३. सूरतनगरात् १९५७ ई० वषे प्रकाशितम् ।

४ भारत्या ६-१ अके प्रकाशितम् ।

५. भारत्या ७-४ अके प्रकाशितम् ।

जनकसभामासाद्य कहोडस्य स्वकीयपितुर्जेतार वन्दिन विद्वास पराजयते। पश्चाद्वन्दिनो निर्देशानुसार दूरद्वीपे तेनैव बन्दीकृत स्वपितरं पुनर्लभते।

## भक्तिचन्द्रोदयम्

वेंकटकृष्णरावस्येदं नाटक भारतीयपरम्परानुसार सुप्रणीतम्।[1] नायको भगवान् पुरुषोत्तमो लोकस्य भक्तिवैमुख्येन खिन्नाश्च नारदव्यास-शकररामानुजादयो नितरा भौतिकता प्रपन्न लोक भक्तिमार्गे समानेतु यतन्ते।

## हरिहरत्रिवेदिनो नाटकद्वयम्

एम० ए०, डी० लिट्० उपाधिविभूषितो डा० त्रिवेदी मध्यभारतस्य राजकीयसेवायामुच्चपदेषु स्थित सन् भारतीयसस्कृति सस्कृत चाधिकृत्य बहु लिखितवान्। सम्प्रति सेवामुक्तोऽयमिन्दौरनगरे निवसति। एतेन नागराजविजय, गणाभ्युदय चेति नाटकद्वय विरचितम्।

नागराजविजयस्याभिनय उज्जयिन्या निष्पन्न.[2]। अस्मिन्नाटके नागराजः शकान्नुज्जयिनीतो विद्राव्य कुषाणान् भारताद्बहिष्कर्तु प्रयतते।

डा० त्रिवेदिनो गणाभ्युदयमिति पञ्चाङ्के नाटके भारतीयगणराज्या-नामभ्युदयस्तत्र समागतबाधाना निरसन च बहुविधरोचकसविधानै. सम्यक् विशदीकृतम्।[3]

## नराणां नापितो धूर्तः

नाराणां नापितो धूर्त इति नाटकस्य प्रणेता नारायणशास्त्रिकाङ्करो राजस्थानस्य जयपुरनगरवास्तव्यो वर्तते।[4] प्रकृतस्यैकाङ्कस्य चतुर्षु लघुदृश्येषु नापितस्य रामकिशोरस्य कथा वर्तते। व्यापाराय पत्न्या नगर प्रति प्रेषितोऽसौ मार्गे स्वकीयधूर्ततया दानवाना महतीं श्रियमवा-प्तवान्।

---

१ मञ्जूषाया १९५७ ई० वर्षे प्रकाशितम्।

२ सस्कृतप्रतिभायां १९६० ई० वर्षे प्रकाशितम्।

३. दिल्लीत, सस्कृतरत्नाकरे १९६६ ई० वर्षे प्रकाशितम्।

४ मधुरवाण्या १९५७ खीष्टाब्दे प्रकाशितम्।

शास्त्रिणान्यान्यपि बहूनि लघुरूपकाणि विरचितानि । तेषु स्वातन्त्र्य-यज्ञाहुतौ १९४२ ई० काले स्वातन्त्र्यमहायुद्धे भारतीयमहावीराणा योधन-शीलानां शासकैर्दमन सकरुण निरूपितम् ।[1]

## दस्युरत्नाकरम्

दस्युरत्नाकरस्य प्रणेता ध्यानेशनारायणचक्रवर्ती रवीन्द्रभारती-विश्वविद्यालयस्य प्राध्यापकोऽभवत् ।[2] रवीन्द्रस्य कतिपयनाटकानि गीतानि च संस्कृतभाषयानूद्य स कृती वर्तते ।

नान्दीभरतवाक्यप्रस्तावनारहितमेकाङ्कनाटक दस्युरत्नाकर चतुर्षु दृश्येषु विभक्तम् । दस्युरत्नाकर' कालान्तरे वाल्मीकिर्बभूव । तस्य चरित्रविकासार्थ बहुविधानि सविधानानि कविना कथावस्तुनि समावेशितानि ।

## सावित्री-नाटकम्

सावित्रीनाटकस्य रचयिता श्रीकृष्णमणित्रिपाठी पूर्वोत्तरप्रदेशस्य देवरियामण्डलवास्तव्योऽस्ति[3] । बहुविषयाचार्योपाधिविभूषितोऽयं स्वकीयपाण्डित्यबलेन सम्पूर्णानन्दसंस्कृतविश्वविद्यालये आचार्यपद-मवाप्नोत् । पुराणादिकमधिकृत्य तेन बहुविधग्रन्था विरचिता· । प्रकृत-नाटके सावित्रीसत्यवतो प्रसिद्ध कथावस्तु प्रपञ्चितम् ।

## भैमीनैषधीयम्

सीतारामाचार्यो भैमीनैषधीयस्य प्रणेतास्ति ।[4] अस्मिन् एकाङ्के चत्वारि दृश्यानि सन्ति । अत्र दमयन्ती-नलयो· परिणय-वृत्तान्तो वर्तते । भारतीपत्रिकयायोजितायामेकाङ्कनाटक-प्रतियोगितायामस्य समावेशो-ऽभवत् ।

---

१ स्वातन्त्र्ययज्ञाहुते प्रकाशन दिल्लीत १९५६ ई० वर्षेऽभवत् ।

२. मजूषाया १९३७ ई० वर्षे प्रकाशितम् ।

३. वाराणस्या भारतीयसाहित्यमालाया प्रकाशितम् ।

४ भारती-पत्रिकायां १९६७ ई० वर्षे प्रकाशितम् ।

## श्रीकृष्णदौत्यम्

श्रीकृष्णदौत्यमिति लघुनाटकस्य रचयिता भास्करकेशवढोकोऽस्ति।[1] अत्र द्रौपदीभीमयोर्विरोधे सत्यपि युधिष्ठिरस्य निर्देशानुसार श्रीकृष्णो दौत्येन दुर्योधन प्रति गच्छति, दौत्य समाचरति च।

## रत्नावली

रत्नावलीरूपकस्य प्रणेता बडौदावास्तव्यो बदरीनाथशास्त्री वर्तते। बडौदानगरस्थ विद्वत्सभाया पञ्चमे वार्षिकोत्सवे कन्याभिरभिनीतेयम्। अत्र राधाकृष्णयो. प्रणयात्मकमितिवृत्त रूपकायितम्। सवादाश्चटुला सन्ति। वाक्यावली नाट्योचिता सुसरला च वर्तते।

## सत्यारोहणम्

सत्यारोहण पाण्डिचेरीनगर्या श्रीमात्रा विरचितम्।[2] रूपकमिदं जीवनदर्शनं विश्लेषयति। सत्यान्वेषण कथ कर्तव्यमित्यत्र निदर्शितम्।

## कृषकाणां नागपाशः

कृषकाणां नागपाश इति लघुरूपकस्य प्रणेता विद्यावाचस्पतिर्वागीशो-पाख्यो व्याकरणाचार्यो भागीरथप्रसादत्रिपाठी अस्ति।[3] वागीशस्य जन्म मध्यप्रदेशे सागरमडले बिलइया ग्रामेऽभूत्। वागीशः सम्प्रति सम्पूर्णानन्दसस्कृतविश्वविद्यालयेऽनुसधानसञ्चालको नियुक्त। त्रिपाठिना हिन्द्या सस्कृतेन च बहुविधानि पुस्तकानि विरचितानि।

रूपकेऽस्मिन् कृषकाणां दुःस्थितिः सम्यक् चित्रिता। तेषां दुर्दशा श्रुत्वा गान्धिमहाभाग "भूमौ सार्वजनिक. समानाधिकारः" इति नैसर्गिकविधानमूरीकरोति।

## नागेशम्

नागेशनाम्न एकाङ्करूपकस्य रचयिता विद्यार्थी इत्युपाख्यो वामदेव

---

१. भारत्यां ६-११ अङ्के प्रकाशितम्।

२. पाण्डिचेरीतोऽरविन्दाश्रमात् १९५८ ई० वर्षे प्रकाशितम्।

३. काश्याश्चौखम्बा-विद्याभवनत १९५८ ई० वर्षे प्रकाशितम्।

उत्तरप्रदेशस्य गढवालनगरस्य निवासी वर्तते ।[1] अस्मिन् रूपके तेन महावैयाकरणस्य नागेशस्यौदार्यं वर्णितम् । वामदेवस्य लेखनी भावोत्कर्षिणी विद्यते । रूपकमिद कथावस्तुसविधानादिदृष्ट्या विलक्षण-मेव विलसति ।

## प्रतिभा–विलासम्

मैसूरवासिनो ह० व० भुजङ्गाचार्यस्य प्रतिभाविलासं नाटक दृश्य-त्रयस्यैकाङ्कम् ।[3] प्रारम्भोऽस्य बुभुक्षितब्राह्मणस्येकोक्त्या भवति । दैवात्त-दैव कालिदासो दृश्यते । ब्राह्मणेन स्वीयदारिद्र्यनिवारणाय प्रार्थितोऽसौ कविनिर्दिशति—मम गृहेऽद्योषित्वा श्वो राजसभामागम्य "त्रिपीडा परिहारोऽस्तु" इति वक्तव्य भवता ।

अपरेद्यु. विलम्बाद्राजसभाङ्गत कालिदासो राज्ञा पृष्टोऽवदत् गुरु-सेवायामासमिति । दर्शनार्थमुत्कण्ठितराजाज्ञयासौ ब्राह्मणः समानीतः । स च "त्रिपीडास्तु" इत्युक्त्वैव तूष्णीं बभूव । शापो दत्तोऽनेनेति राज्ञो भावमवलोक्य कालिदासस्त शापमाशीर्वचनत्वेन सम्यक् व्याख्या-तुमवोचत्—

आसने विप्रपीडास्तु शिशुपीडास्तु भोजने ।
शयने दारपीडास्तु त्रिपीडास्तु नरेन्द्र ते ॥

तदा पर प्रीतेन भोजेन बहुविधदानैरसौ ब्राह्मण सम्मानितः ।

## दे० ति० ताताचार्यस्य नाटकद्वयम्

वैदेशिकशैलीमधिकृत्य प्रणीत ताताचार्यस्य पुन स्सृष्टि', सोपान-शिला चेति नाटकद्वय प्रसिद्धम् ।[3] तत्र प्रथम दृश्यत्रयस्यैकाङ्क द्वितीयञ्च सप्तदृश्यानामेकाङ्कम् ।

पुन'सृष्टौ नायिका भारवती पतिंवरा प्रहर्षण वरितुमिच्छति । पिता ता नातिसुन्दराय चन्द्रकीर्तये प्रदातुमभिलषति । तत' प्राणान् त्यक्तुकामा सा सख्या धेनुमत्या रक्ष्यते । कृष्णश्चन्द्रकीर्ते. पुनःसृष्टि-

---

१ देवप्रयागस्य काव्यसदनेन १९५८ ई० वर्षे प्रकाशितम् ।

२. भारतीय-पत्रिकायां १९७५ ई० वर्षे प्रकाशितम् ।

३ संस्कृत-प्रतिभायां १९५९-६० ई० वर्षयो प्रकाशितं नाटकद्वयम् ।

विदधाति। तेनासौ सुन्दरतमः सुकृतः। भास्वती तं वृणोति। प्रहर्षेण धेनुमती उद्‌वूढा।

सोपानशिलेति रूपके कापिलजाज्योदाम्पत्यं सुखकरं वर्तते। ग्रामप्रधानस्तत्र बाधको भवति। कापिलस्य गृहे जटिता सोपानशिला चौर्येण ग्रामप्रधानः स्वकीये नूतने गृहे प्रयुक्ता। न्यायार्थं कापिलेन प्रयासे कृते प्रमाणाभावात्कापिलविरुद्धो निर्णयो भवति। पश्चाच्चासौ मानहानेरभियुक्तो विधीयते। दैवाद् गृहप्रवेशावसरे ग्रामप्रधानस्य शिरसि बृहन्मृत्तिकाखण्डमापतति, पुत्रश्च तस्य यानदुर्घटनाया म्रियते। स्वपापस्य फलमिदमित्यनुशोच्य प्रायश्चित्तार्थं स्वकीयां कन्यामसौ कापिलस्य पुत्राय समर्पयति।

## रामराज्यम्

वि० वि० श्रीमहोदयेन रचिते नाटके रामराज्ये उत्तमस्य नृपतेरादर्शो वर्णितः[1]। तत्राङ्काः प्रेक्षणकेषु विभक्ताः। कथारम्भः सीतारामयोः पट्टाभिषेकाद् भवति। रजकात्सीतादूषणं श्रुत्वा सीतया सह रामो वनं गन्तुमभिलषति। नाटके वार्तालापतत्त्वस्य वैशिष्ट्यं वर्तते। संवादा बहुशोऽतिदीर्घाः सन्ति। नाट्यनिर्देशाः कार्यपरा विद्यन्ते।

## सरोजिनीसौरभम्

सरोजिनीसौरभस्य नाटकस्य प्रणेता आन्ध्रप्रदेशस्य राजमहेन्द्रवरमिति नगरस्य निवासी भारतीसंस्कृते परमोपासकोऽनेकविद्याविशारदः श्रीमहीधरवेङ्कटरामशास्त्री वर्तते।[2] नाटकेऽस्मिन् ग्रामोत्थानयोजना तत्त्वतो दर्शिता। गुणचन्द्रनायकः पितुर्विरोधेऽपि स्वकीयां प्रणयिनीं सरोजिनीं परिणयति। श्रीधरो नामापरः कश्चिन्नायिकाभिलाषी मिथ्याचौर्याभियोगबलान्नायकं न्यायालये नयति। किन्तु सत्यमचिरं प्रकटितमेव। गुणचन्द्रेण प्रभावितो राजा तस्मै सेनापत्यादिपदप्रदानक्रमेण राज्यमेव समर्पयति। गुणचन्द्रं रक्षन्ती चिरात्प्रच्छन्ना सरोजिनी राजमहिषी भवति।

---

१. उद्यान-पत्रिकायां १९५९ ई० वर्षे प्रकाशितम्।

२. [illegible] ख्रीष्टाब्दे लेखकेनैव प्रकाशितम्।

## मेनन-देवकीदेव्या नाटकानि

मद्रासनगरस्य क्वीनमेरीमहाविद्यालयस्य सस्कृतविभागाध्यक्ष-पदात्सेवानिवृत्ता देवकीमेननेति विदुष्या प्रणीते कुचेलवृत्तमिति सगीत-प्रेक्षणके सप्ताङ्का सन्ति[1]। मेरीमहाविद्यालयस्य छात्रैरभिनीतमिदम्।

दारिद्र्येणातिपीडित कुचेल पत्न्यनुरोधेन कृष्णमुपगम्य पत्नी-प्रदत्तपृथुक तस्मै प्रदातु नेच्छति लज्जया। पश्चाच्च—

हरिश्च तस्मात्पृथुक जहार,
प्रदर्शयन् गोकुलबाललीलाम्।

तत. पृथुकमश्नन् कृष्णस्तस्मै बहुधन प्रददाति। गृहमागत्यात्मन' सर्वैश्वर्यञ्चालोक्यातिविस्मित कुचेल सपरिवारो भगवत्पूजन संकीर्तनञ्च विदधाति।

## सैरन्ध्री-प्रेक्षणकम्

लघुतरेऽस्मिन् सैरन्ध्रीत्येकाङ्कप्रेक्षणके कृष्णासक्तकुब्जायाः कथा प्रवर्तते। कृष्णबलरामयोरागमनमाकर्ण्य सा भृश जनसम्मर्देऽपि तावुपगम्याङ्गरागेण तयोरनुरञ्जनं करोति, कृष्णश्चाङ्गस्पर्शेन तस्या कुब्जात्व दूरयति। मङ्गलगानेन प्रेक्षणक समाप्तम्।

## पौरव-दिग्विजयम्

बङ्गलौर-वास्तव्यः एस० के० रामचन्द्रराव—पौरव दिग्विजयस्य लेखक।[2] लेखकः 'आल इण्डिया इस्टीट्यूट आव मेण्टल हेल्थ' इति सस्थाया बङ्गलौरनगरे प्रवाचक आसीत्। नाटकानुसार पुरु स्वयोजनया भारतीय-नृपाणा सघ निर्माय अलक्षेन्द्रेण युद्ध्यते स्म।

## श्रीकृष्ण-दौत्यम्

श्रीकृष्ण-दौत्यस्य लेखक. बी० के० ढोक-महाभागो नागपुरवास्तव्य आसीत्।[3] नाटकेऽस्मिन् त्रीणि दृश्यानि सन्ति। श्रीकृष्णस्य दौत्यकर्म

---

१ १९६१ ई० वर्षे संस्कृतप्रतिभायां प्रकाशितम्। संगीतप्राचुर्यादिद 'ओपेरा' इत्यपि कथ्यते।

२. १९६० वर्षे सस्कृत-साहित्य-प्रतिभायां प्रकाशितम्।

३. नागपुरे सस्कृत-भवितव्यम्—धारा प्रकाशनमस्य १९५९ ई० वर्षेऽभवत्।

स्वीकृत्य दुर्योधन प्रति गमनमिति महाभारतीया कथा अस्मिन्नाटके वर्णिता। एतस्य त्रिषु दृश्येषु उच्चकोटिकाना गीताना वैशिष्ट्य विद्यते।

## श्रीकृष्ण-भिक्षा

रूपकस्यास्य लेखक' एच० वी० नारायणशास्त्री बङ्गलौर वास्तव्य आसीत्।[1] अस्मिन्नङ्कद्वये तत्सम्बन्धि-महाभारतीय कथावस्तु विद्यते।

## धर्मरक्षणम्

षडङ्कं धर्मरक्षण नाम नाटक निर्मितमस्ति तिरूपति-वास्तव्येन वेङ्कटेश्वरविश्वविद्यालयस्य तेलगुविभागस्य प्राध्यापकेन लक्ष्मीनारायण-रावेण।[2] अस्मिन्नाटके एकलव्यस्य सुप्रसिद्धा महाभारतीया कथा विद्यते। एतदनुसार एकलव्य कर्णस्य प्रार्थनां स्वीकृत्य कौरवपक्षे युद्धायोपक्रमते। कृष्णेन स हत'। नाटकेऽस्मिन् पद्यानामाभावो विद्यते। सम्पूर्ण नाटकं गद्यमयमस्ति।

## कृतार्थकौशिकम्

कृतार्थकौशिकस्य प्रणेता नैनीतालवास्तव्य श्रीकृष्णजोशी (१८८२-१९६५ ई०) प्रयागस्थ-म्योरमहाविद्यालये उच्चशिक्षा समाप्य कञ्चित्काल कुमायूँनगरे वाक्कीलव्यवसायानन्तर देशसेवाया व्यापृतोऽभूत्। पश्चान्मदनमोहनमालवीयस्याकर्षणेन काशी-हिन्दू-विश्वविद्यालयेऽशिक्षयत। सस्कृतपाण्डित्यमस्यानुवशिकमेवासीत्। बहुषु विद्यासु पारङ्गतो विद्वानय "अन्तरङ्गमीमासा" निर्मायोत्तरप्रदेशशासनस्य १५०० रूप्यकाणा पुरस्कार लब्धवान्। वाग्वैदग्ध्येन विद्याभूषण-कविसुधा-शूपाधिद्वय लभते स्म। कृतार्थकौशिक,[3] सत्यसावित्र, परशुरामचरित चेति नाटकत्रयमस्योपलभ्यते।

---

१ 'पूना ओरियण्टलिस्ट' इति पत्रिकाया १९५९ वर्षे प्रकाशितम्।

२ १९६१ ई० वर्षे त्रिलिङ्ग ग्रन्थमाला, तिरुपति-नगरत प्रकाशितम्।

३ अखिलभारतीयसस्कृतपरिषद, लखनऊनगरत १९६५ ई० वर्षे प्रकाशितम्।

कृतार्थकौशिकानुसारं महाराजो गाधिः स्वकन्याया विवाहमौर्वेण सह सम्पाद्य दस्यून् पराजेतु स्वकीयां शक्ति वर्धयते। दस्यवो गाधिपुत्र विश्वामित्र तत्सहायक ऋक्षञ्च बन्दीकुर्वन्ति। तत्र दस्युराजदुहिता "उग्रा" विश्वामित्र पतिरूपेणाकाङ्क्षत्। आर्यसेनया दस्यूनाक्रम्य विश्वामित्रस्य गुरुरगस्त्यस्त मोचयितु प्रायतत। दस्युसेनापतिरात्मन इष्टदेवस्य-साहाय्यमवाप्तु तस्मै विश्वामित्र बलि दातुकामोऽभूत्। किन्तूग्राया साहाय्येन विश्वामित्रस्ततो निष्क्रम्य प्राणान् ररक्ष। गान्धर्वरीत्या तौ परिणीतौ। पर गर्भवतीमुग्रा भैरवो जघान। ततस्तपो विहाय राष्ट्ररक्षार्थमसुरान् पराजेतु प्रवर्तमानस्यागस्त्यस्य पुत्र्या रोहिण्या विश्वामित्र उदूढ।

षडङ्केऽस्मिन्नाटके पात्राणा सख्यात्यधिका वर्तते। पद्यानामपि सख्या षष्टीति बहुलैव। राष्ट्ररक्षार्थं राष्ट्रियसंघटनस्य सर्वस्वत्यागस्य च प्रतिफलनमत्र साधु कृतम्।

## हर्षदर्शनम्

हर्षदर्शनस्य रचयिता पुण्यपत्तनवासी डेग्वेकरपाण्डुरङ्गशास्त्री पण्ढरपुरक्षेत्रस्य सस्कृतविद्यालये व्याकरण न्याय-वेदान्तादिशास्त्राण्यध्यापयति स्म। अस्य सस्कृतसाहित्याध्ययन सुगभीरमासीत्। स हि १६६१ खीष्टाब्दे दिवङ्गतः।

हर्षदर्शनस्य पञ्चाङ्केषु हर्षेण पूर्वभारतविजयस्य कथावस्तु प्रपञ्चितम्। पूर्वसागराञ्चलस्थस्य राज्यस्य नृपतिश्चण्डदेव शान्तिवर्मणो राज्य स्वायत्तीकृतवान्। शान्तिवर्मणो दुहिता प्रतिमा तत्सखी चन्द्रिका च युद्धशिक्षामवाप्याश्रयार्थं हर्ष संगम्य चण्डदेवस्य विनाशाय प्रावर्तयताम्। हर्षस्याक्रमणमाशंक्य चण्डदेव प्रतिरोधाय मगधराजेन शशांकेन सह गुप्ताभिसन्धि समाचरत्। कुशलतरसाहाय्यबलेन स्वकीयरणकौशलेन च हर्ष आत्मनो भ्रातृघातक शशाक चण्ड च निजघान। ततः प्रतिभया सह हर्षस्य चन्द्रिकया सह तन्मित्रस्य चकोरस्य च विवाहः सजातः।

प्रथमेऽङ्केऽरुणवरुणयोर्हननसाङ्गविषयकवार्तालापो हेयः स्यात्।

नाटकमिदं मुद्राराक्षसमनुहरति । प्रवेशकविष्कम्भकयोरभावो वर्तते । रङ्गपीठे स्थितेष्वप्यन्यपात्रेषु चतुर्थाङ्के हर्षस्यैकोक्ति विरलप्रयोग एव ।

## रामलिङ्गशास्त्रिणो नाटकानि

बोम्मकण्टिरामलिङ्गशास्त्री सम्प्रति उस्मानियाविश्वविद्यालये संस्कृतविभागमध्यक्षयति । प्राच्य-पाश्चात्त्यविद्यानिकरं गभीरमधीत्य स सम्यक् ग्रन्थते । बहुविधं काव्यमाधुनिकवैदेशिकशैलीमधिकृत्य तेन प्रणीतम् । शास्त्रिण. सर्वा कृतय प्रकाशिता ।

रामलिङ्गस्य नाटकानि सत्याग्रहोदयम्, शुनःशेपम्, मेघानुशासनम्, सुग्रीवसख्यमित्यादीनि प्रकाशितानि सन्ति ।

सत्याग्रहोदयनाटकस्य कथावस्तु जञ्जीवारद्वीपे गान्धिन कार्यकलापादारभ्य १९१४ ई० वर्षे जुलाईमासस्याष्टादशतारिकाया सन्ध्याया जोहान्सवर्गे गान्धिपोलेनत्राक-हबीबादीना वार्तालाप यावत् प्रवर्तते । शास्त्रिण प्रमुख नाटकमिदं गान्धिनो वर्षशतकमहोत्सवावसरे १९६९ ई० वर्षे प्रकाशितम् । नाट्यविधानमत्र प्रायेण भारतीय नास्ति ।

शुन.शेपमिति रूपक रोहिताश्वस्यैकोक्त्या प्रारभ्यते । ततोऽकालपीडितस्याजीगर्तस्य रोहिताश्वस्य च विपत्तिनिवारणमधिकृत्य वार्तालापो प्रवर्तते ।

शुन शेपो यज्ञे आत्मबलिदानेनाजीगर्तं रक्षितु यतते । विश्वामित्रेण शुनःशेपोऽपि रक्ष्यते ।

अत्र भावपरा प्रासगिकवृत्तान्ता रमणीया सन्ति । प्रस्तावनाभरतवाक्ययोरभावो वर्तते । प्रथमे दृश्ये रोहिताश्वस्यैकोक्तिमात्रमस्ति ।

पञ्चदृश्यात्मके मेघानुशासनेऽनावृष्टिसन्तप्तस्य सपत्नीकचाक्रायणस्येतिवृत्तमधिकृत्य छान्दोग्योपनिषदो मेघगर्जन, देवासुरमानवानामनुशासन, दमदत्तदयध्वाना ग्रहणस्योपदेशाख्यान साधु विलसति ।

सुग्रीवसख्यस्य षट्स्वतिलघुदृश्येषु सुग्रीवरामयोर्मैत्रीभावप्रतिष्ठापनस्येतिवृत्तमस्ति ।

मातृगुप्तस्य लघुतरदृश्यद्वये राजतरङ्गिण्यां वर्णितस्य मातृगुप्तस्याख्यान प्रपञ्चितम् ।

देवयानीति रेडियोरूपकानुसार—

रागरोषावेशभरित देवयानीचरितम् ।
प्रस्तूयते भवता मुदे रसिका विलोकयादरात् ॥

अस्मिन् रूपके देवयान्या कूपपतन, ययातिना सह विवाह, ययातेः शर्मिष्ठया गान्धर्वविवाह, देवयान्या क्रोध इति घटनाश्चर्चिता । पञ्चमे दृश्ये छायापुरुषस्यागमन छायातत्त्वानुसारि वर्तते ।

यामिनीति नभोनाट्ये बिल्हणस्य राजकन्याया यामिन्याश्च ललिता सगमनकथा रूपकायिता ।

१९६२ खीष्टाब्दे विक्रान्तभारत रामलिङ्गमहोदयश्चन्द्रगुप्तमौर्यस्य पराक्रमनीति वर्णयितुमरचयत् । नैकेतिहासग्रन्थपरायणेन कविना विषयसामग्रीं सकलय्य प्रणीतमिद नाटकमिति वैशिष्ट्यम् । अ स्य सगीतरूपान्तरस्य प्रसारण १९६३ ई० वर्षस्य १५ अगस्तदिवसे हैदराबादनभोवाणीतोऽभवत् ।

नाटकेऽस्मिन् ग्रीकशासकान् भारताद्बहिर्निस्सार्य चाणक्यचन्द्रगुप्ताभ्या बृहत्साम्राज्यस्थापनस्य वर्णन वर्तते । पूर्वकविपरम्परानुसारं नूतनसविधानायोजनेऽत्र लेखक साधु प्रवर्तते ।

## गजाननबालकृष्णस्य नाटकानि

गजाननबालकृष्णपलसुले पुण्यपत्तने संस्कृतप्रगताभ्यास-केन्द्रस्य प्राचार्यो वर्तते । तेन भारतवाणीति संस्कृतपाक्षिक सम्पादितम् । बालकृष्णेन बहूनि नाटकानि विरचितानि । तद्यथा, १. समानवस्तु मे मन', २ धन्येय गायनी कला, ३. धन्योऽह धन्योऽहम् ।

१९६१ खीष्टाब्दे भारतप्रशासनस्य वैज्ञानिकसंशोधनसांस्कृतिककार्यविभागद्वारा "भारतस्यैकात्मतान्वेषणम्" इति विषयमालम्ब्य

नाटकप्रतिस्पर्धा समायोजिता। तदर्थं "समानमस्तु मे मन." इति सर्वोत्तमनाटक विलिख्य पलसुलेमहोदय एकसहस्ररूप्यकाणा पुरस्कार लब्धवान्।

भाषानुसार राज्यनिर्माणकालेऽसमे बगे च घटिता अशोभना घटना एवास्य नाटकस्य पृष्ठभूमि।[1] भारतस्यैक्यार्थ पूर्वविहित-प्रयासाना तत्फलानाञ्चाकलन कविना सम्यक् कृतम्।

धन्येय गायनीकलेत्येकाङ्कनाटके नायकस्य ठणठणपुरस्थस्य चक्रमादित्यस्य चर्या सर्वथा हास्यपूर्णास्ति। कदाचित्कस्यचिद् गायकस्य "राज्ये गायनीकला प्रतिष्ठा लभेत" इतीच्छा पूरयन् प्रसन्नो राजा कथयति—मस्तिष्के शोभना आयडिया आगता कि राज्य मे कोई गद्यभाषण न करे। सर्वेण पद्नीयम्। जो गद्य बोले, उसे मार डाला जाय—इति। फलतो कालान्तरे राजभवनमेव भस्मीभूतम्।

धन्योऽह धन्योऽहमिति नाटके स्वातन्त्र्यसग्रामेऽग्रगण्य-सेनानायकस्य सावरकरस्य समग्रमुदात्तचरित चित्रितम्। भाषाया: सारल्यमत्र सर्वथा नाट्योचितम्, किन्तु दीर्घभाषण न कथमपि समीचीनम्।

## संयुक्तापृथ्वीराजम्

सयुक्तापृथ्वीराजमिति नाटकस्य प्रणेता पण्डितप्रवरो योगेन्द्रमोहन (१८८६-१९७३) आसीत्। नाटकमिदमैतिहासिक वर्तते। अत्र सयुक्तापृथ्वीराजयो· प्रणयकथा प्रपञ्चिता।

## भारतीविजयम्

शठकोपविद्यालकारस्य भारतीविजयमिति नाटके हिन्दी, उत्कली, द्राविडी, आन्ध्री, बङ्गी चेत्यादिभाषा· परस्पर सवदन्ति।[2] प्रथमे दृश्ये

---

१ शारदाग्रन्थमालायां प्रकाशितम्।

२. भारत्या १० ८-९ अङ्कयो· प्रकाशितम्।

सरस्वती भुवि समागत्य नृत्यगीतादिकं चरति। द्वितीये ब्रह्मणः सामगानं भवति सरस्वती च वीणां वादयति। तदनन्तरमेकदा आङ्गली भारतमागत्य स्वीयकूटनीत्या भारतीयभाषाः परस्परं विभेदयितुं ताश्च शासितुं प्रयतते। कदाचिन्नारदाद् "भारतीयभाषा भ्रष्टाः" इति श्रुत्वा ब्रह्मा कमपि महात्मानं भुवि प्रेषयति। सरस्वती च समागता। सरस्वत्युपदेशतो भारतीया भाषा आङ्गल्या दुष्प्रभावाद् विमुक्ता भवन्ति। महात्मना कथितम्—न केवलं भारते एव भारतीविजयः, अपितु विदेशेष्वपि भारतीविजयः उद्घोषितो मया इति।

## चतुर्वाणी

चतुर्वाणी चतुर्णामेकाङ्करूपकाणां सङ्ग्रहो वर्तते। अत्र प्रतिज्ञाकौत्सम्, आनूरवम्, ऐकलव्यम्, पद्मावतीचरण-चारण-चक्रवर्ती चेति चतस्रो नाट्य' संकलिता।[1]

तत्र प्रतिज्ञाकौत्से रघुवंशस्थपञ्चमसर्गस्य कथा ग्रथिता। आनूरवे महाभारतस्य कद्रूविनतयोः कथानकमस्ति। ऐकलव्ये महाभारतप्रसिद्धस्यैकलव्यस्येतिवृत्तं वर्तते। पद्मावती चरण-चारण चक्रवर्ती शिवशंकरस्वामिना विरचितान्ध्रनाटिकाया अनुवादमात्रमाभाति।

चतुर्वाण्याः प्रणेता कोगण्टिसीतारामाचार्यो न केवलं कविरेवापित्वध्यात्मविद्याया शास्त्रेषु, तन्त्रादौ च निष्णात आसीत्।

## सरस्वती-पूजनम्

अङ्कद्वयात्मकस्य सरस्वतीपूजनस्य प्रणेता हेमन्तकुमारतर्कतीर्थो वंगीयोऽध्यापको महाकविश्चास्ति। रूपकेऽस्मिन् गङ्गासरस्वत्यो' प्रणयात्मकस्य कलहस्य काल्पनिकं वर्णनं प्रवर्तते।[2] कलहे लक्ष्म्या आक्षेप उपेक्षित। ततो नारायणस्य माध्यस्थ्येन कथा समाप्यते।

अत्र संवादाः सरसाः सन्ति। किंविधं रूपकमिति कोटिं निर्धारयता लेखकेनेदं "रूपकप्रायं किञ्चित्" इति कथितम्।

---

१ चतुर्वाणी गुण्टूरुतः प्रकाशिता।

२ प्रणवपारिजातस्य तृतीयवर्षे प्रकाशितम्।

## अङ्गुष्ठदानम्

पञ्चाङ्कस्याङ्गुष्ठदानमिति नाटकस्य प्रणेता उत्तरप्रदेशस्य एटा मडले जातो रामकिशोरो बालकवि सम्प्रतिमहाविद्यालये आचार्योऽस्ति।[१] नाटकेऽस्मिन् महाभारतस्यैकलव्याख्यान नवतरसविधानै सवलित साधु रूपकायितञ्च। रामकिशोरस्यापर नाटक ध्रुवमिति पौराणिकी कथामनुहरति।[२]

## नवोढा वधूः वरश्च

प्रहसनस्यास्य प्रणेता कलिकाताविश्वविद्यालस्य पट्टाभिरामशास्त्री वर्तते। अत्र विविधहास्यसर्जन सर्वथा शिष्टमुत्कृष्ट चास्ति। कोमलाङ्गी कृष्णकुमारेणोढूढा। किन्तु मनोरमाया विभिन्नव्याजैर्नानयो सगमन बहुदिनानि यावद्भवति। निर्वहणे कोमलाङ्गी रहसि "जीवनपर्यन्त न त्यक्ष्यामि" इति पत्यु. शपथग्रहणेन सत्य निवेदयति यदह नपुसकेति।

## कालिदासीयोपरूपकाणां समुच्चयः

कालिदासीयोपरूपकाणां समुच्चय इति कालिदास-स्मृतिसमारोहावसरेषु कालिदासीय-काव्य-पात्र चरितादीनि समाश्रित्य विद्वद्भिर्विरचितानां रूपकाणां संग्रहोऽय प्रकाशित.। तत्रैकादशोपरूपकाणि सकलितानि। तथाहि—

### वीर-वदान्यम्

वीरवदान्यस्य रचयिता एम० ए०, डी० लिट् इत्युपाधिविभूषितो डा० चण्डिकाप्रसादशुक्ल: प्रयागविश्वविद्यालस्य प्रवाचकः। अत्र रघुवंशस्य प्रथम-द्वितीय-तृतीय पञ्चमसर्गाणां कथा क्रमश प्रथम-द्वितीय-तृतीय-चतुर्थाङ्केषु विलसन्ति। भाषा भावस्तथा शैली कालिदासानुसारं प्रवर्तन्ते। डा० शुक्लस्य तापस-धनञ्जय-नामापर नाटक किरातार्जुनीयमुपजीवति। प्रयागविश्वविद्यालयस्य सस्कृत विभागेनाभिनीतमिदमप्रकाशितमद्यावधि लेखकस्य सविधे वर्तते।

---

१ उत्तरप्रदेशे कासगंजत. १९६३ ई० वर्षे प्रकाशितम्।

२. दिव्यज्योतिः पत्रिकायां १९६३ ई० वर्षे प्रकाशितम्।

## पुनःसङ्गमम्

पञ्चाङ्केषु विभक्तस्य पुन सङ्गमस्य प्रणेता न्यायाचार्य आनन्दझा लखनऊ-विश्वविद्यालयस्य व्याख्याता अस्ति।[१] अत्र कुमारसभवस्य प्रथम-तृतीय-पञ्चमाङ्काना कथानक रूपकायितम्। गद्यात्मक-सवादा रुचिकरा सन्ति। नान्द्या प्रस्तावनाया भारतवाक्यस्य चाभावो वर्तते।

## कालिदास-पाणिकरणम्

कालिदास-पाणिकरणस्य लेखक आरानगर्या बालगोविन्दविद्यालय-स्याध्यापक प० रमानाथपाठको वर्तते।

लोकोक्तिमधिकृत्य कालिदासस्य मौर्ख्यम, राजकुमार्या. सह मौनशास्त्रार्थ, विवाहः, पत्न्या गृहान्निस्सारणम्, देव्याराधनम्, वैदुष्य-प्राप्ति' गृहागमनम्, पतिपत्न्यो सयोगश्चैते प्रसङ्गा भरतवाक्यरहिते पटाक्षेपेषु विभक्ते दृश्यत्रयात्मकेऽस्मिन्नाटके विराजन्ते।

## सीता-त्यागम्

सीतात्यागस्य रचयिता दक्षिणभारतस्य नान्देडे सस्कृतमहाविद्यालय-स्याध्यापकोऽच्युततात्यारावबोडवेऽस्ति। कृतावस्या रघुवशस्य चतुर्दश-सर्गस्योत्तररामचरितं कथा वस्तु वर्तते।

## मदनदहनम्

मदनदहनस्य प्रणेता मुम्बई-वास्तव्यो रमेशखेरो विद्यते। प्रस्तावनानुसारमेतत्प्रवेशद्वयात्मकसगीतप्रधाना एकाङ्कनाटिकैव। मदन-दहनस्य प्रथमोऽभिनयो विल्सनमहाविद्यालयस्य सस्कृत-मण्डलेना-योजित., पश्चान्मुम्बय्या नभोवाण्यास्य प्रसारणमभवत्। गद्यात्मक-सवादरहितेऽस्मिन्नुपरूपके कालिदासीयपद्यै सह स्वरचितपद्यान्यपि सवलितानि सन्ति।

---

१ उपरूपकमिद दरभङ्गाविश्वविद्यालयस्य महेशठक्कुर-ग्रन्थमालात. १९६१ खीष्टाब्दे प्रकाशितम्।

## कालिदासम्

कालिदासमित्येकाकनाटकस्य रचयिता पण्डितो वनेश्वरपाठक[1] सम्प्रति रॉचीनगर्यां सेन्टजेवियरमहाविद्यालयेऽध्यापको वर्तते। विहारस्य सीवानमण्डले समुत्पन्नोऽय काशीत' साहित्याचार्य. एम० ए० उपाधिकश्चाभवत्।

रूपकेऽस्मिन् पराजितपण्डिताना योजनया राजकन्यया सह मूर्खकालिदासस्य विवाह, तस्य मौर्ख्यप्रकटनम्, निर्वासनम्, दिङ्नागाचार्येण मिलनम्, तस्यादेशेन कालीपूजनम् कवित्व-प्राप्ति. आचार्याश्रमे विक्रमादित्यस्य राजकुमार्यादीनाञ्चागमनम् राजकुमार्यै रघुवशादिकाव्यसमर्पणमित्यादि रूपकायितम्।

## मदनदहनम्

रा० श० महाराजेन मदनदहनमिति प्रवेशत्रये विभक्तम्। एतस्मिन्नाटके मदनदहनस्य कथावस्तु कुमारसभवमुपजीवति।

## गुरुदक्षिणा

दरभङ्गावास्तव्येन यदुवंशमिश्रेण व्याकरणाचार्येण गुरुदक्षिणायाञ्चतुर्षु दृश्येषु रघुवशस्थपञ्चमसर्गस्य पकरण रूपकायितम्।

## इन्दुमती-परिणयम्

इन्दुमतीपरिणयस्य रचयिता श्रीनारायणमिश्रो मिथिला-संस्कृत-विद्यापीठस्य गवेषक आसीत्। रूपकेऽस्मिन रघुवशस्थसप्तमसर्गस्याज-विवाहः कथावस्तु वर्तते। एतस्याभिनयो दरभङ्गा-सस्कृत-विश्वविद्यालयस्य विद्वत्परिषदा प्रयुक्त।

## कालिदास-गौरवम्

कालिदासगौरवस्य प्रणेता दरभङ्गामण्डलान्तर्गते जयपुरनगरस्य संस्कृतमहाविद्यालयाचार्यो झापाह्वो जीवनाथशर्मा।

रूपकेऽस्मिन् कालिदासस्य मौर्ख्यम, तदनन्तरं वरप्राप्तिः, महाकवित्वावाप्तिः, विक्रमादित्यात्सम्मानाप्तिश्च कथावस्तु विन्यस्तम्।

---

१ श्रीपाठकेन १९७५ खीष्टाब्दे कालिदासस्य मेघदूतमनुसृत्य प्लवङ्ग-दूतनामकं सन्देशकाव्यं प्रकाशितम्।

## शाकुन्तलम्

शाकुन्तलस्य प्रणेता रामावतारमिश्रोऽध्यापको वर्तते। नाटकेऽस्मिन् शकुन्तलादुष्यन्तयोर्गान्धर्वविवाहानन्तरं कथा प्रारभ्यते। दुष्यन्त' स्ववचो विस्मृत्य शकुन्तला कण्वस्याश्रमात् न स्वगृह नानयति। पश्चात् काश्यपस्याश्रमेऽनयो समागमेन निर्वहणे कथावस्तु प्रवर्तते।

## शिवप्रसादभारद्वाजस्य नाटकानि

एम० ए०, एम० ओ० एल० इत्युपाधिविभूषितो होशियारपुरे विश्वेश्वरानन्दसंस्थानस्य प्राध्यापक शिवप्रसादभारद्वाज उच्चकोटिक' कवि, नाटककार, निबन्धलेखकश्चास्ति। स साक्षात्कार, अजेय-भारतम्, केसरिचक्रमम् च नाटकानि विरचितवान्।

### साक्षात्कार'

साक्षात्कार शिवप्रसादस्यानुत्तमो भाण। अस्य पन्था सर्वथा नवीन'। भाणेऽस्मिन् वामदेवनाम्नोऽभ्यर्थिनोऽध्यापकपदाय साक्षात्कारो विद्यते[1]। चयनसमितेरप्रासगिक-प्रश्नै शोषणप्रवृत्त्या च सुशिक्षिता अपि अभ्यर्थिनः कीदृश क्षुभिता भवन्तीति हास्यरसमालम्ब्यात्र सम्यक् चित्रितम्। अश्लीलतत्त्वाना सर्वथाभाव एतस्य पर विशेषः।

### अजेय-भारतम्

अजेयमभारत शिवप्रसादस्य ध्वनिरूपकमस्ति।[2] अत्र चीनभारत-देशयोर्युद्धं निदर्शितम्। सर्वे भारतवासिनश्चरमत्यागेन शत्रूणा पराजयाय समर्थीभूता।

### केसरि-चक्रमम्

अस्मिन् ध्वनिरूपके स्वातन्त्र्यसेनान्यो लालालाजपतरायस्य समग्र जीवन विशदीकृतम्। अत्र नागरिकाणा हृदि लोकसेवाया राष्ट्रसम्मानरक्षणस्य च भावानुद्भावयितु लेखक' सम्यग् यतते।[3]

---

१. विश्वसस्कृते १९६४ ई० वर्षे प्रकाशित।

२. विश्वसस्कृते १९६३ ई० वर्षे प्रकाशितम्।

३. १९६५ ई० वर्षे विश्वसस्कृते प्रकाशितम्।

## छत्रे-विश्वनाथकेशवस्य नाटकानि

ठाणे-मण्डल वास्तव्यो विश्वनाथकेशवछत्रे महाकवि नाटककारश्च सुप्रसिद्ध'। अस्य बहुविधा रचना' सस्कृतेन मराठीभाषया च विलसन्ति। तस्य नाटकेषु प्रतापशाक्त, सिद्धार्थ प्रव्रजन, शिक्षण, नन्दिनीवरप्रदान च विशिष्टानि सन्ति।

### प्रतापशाक्तम्

राजस्थानस्येतिहासे स्वातन्त्र्योपासको महाराणाप्रताप सुप्रसिद्ध'। तस्यानुज' शाक्तसिह आसीत्। अनयो परस्पर मनोमालिन्य समुत्पन्नम्। उभावपि परस्पर हन्तुमुद्यातावभवताम्। किन्तु कुलगुरोरात्महत्यया तौ शान्तौ बभूवतु'।

शाक्तसिह. प्रतापशत्रुमकबरमाश्रितवान्। अथापमानितो मानसिहो महत्या सेनया प्रतापमाक्राम्यत्। शौर्येण युध्यन्नपि प्रताप प्राणारक्षार्थमेकदा पलायितवान्। तस्याश्चेतको मार्गे मृत। प्रतापस्य तात्कालिकी महाविपत्तिमालोक्य शाक्त. प्रताप शत्रुद्वयस्याक्रमणात् ररक्ष।

### सिद्धार्थ-प्रव्रजनम्

नाटकेऽस्मिन् सिद्धार्थस्य मातुर्गर्भे आगमनकालतः प्रव्रज्याग्रहण यावत्कथा प्रपञ्चिता[1]।

### शिक्षणम्

आधुनिकशिक्षणपद्धतेस्तीक्ष्णालोचन नाटकेऽस्मिन् प्रपञ्चितम्[2]। अस्य प्रथमोऽङ्क' विद्यार्थिवर्गस्याध्यापकवर्गस्य च दुष्प्रवृत्तीना परिचायको वर्तते। संवादैः छात्राध्यापकेषु व्याप्तभ्रष्टाचारः समालोचित.। प्रथमाङ्कस्य घटनाया' पात्राणाञ्च द्वितीय-तृतीयाङ्काभ्यामत्यल्प एव सम्बन्धो वर्तते इति न समीचीनम्। सम्पूर्णेऽपि नाटके कार्यस्याभावोऽसगतमेव।

---

१. १९६४ ई० वर्षे प्रकाशितम्।

२. अमृतलताया १९६५ खीष्टाब्दे प्रकाशितम्।

## जवाहर-स्वर्गारोहणम्

जवाहरस्वर्गारोहणमित्येकाङ्करूपकस्येतिवृत्तमुत्पाद्यमेव[1]। जवाहरस्य मृत्युना लोको भृश दु:खित:। तस्य स्वागत कर्तुं देवाः समुत्सुका अभूवन्। चित्रगुप्तेन जवाहरस्य कृतित्ववर्णनात्मक मानपत्र श्रावितम्। स हि स्वर्लोके पूर्वजानां मध्ये सुप्रसन्नोऽभूत्।

## नन्दिनीवरप्रदानम्

विश्वनाथस्यैकाङ्कमिद १९६४ ई० वर्षे प्रणीतम्[2]। रूपकेऽस्मिन् रघुवशस्य प्रथम-द्वितीय-सर्गयोः कथा प्रथिता।

## कीचक हननम्

कीचकहननमिति रूपक महाभारतमुपजीवति[3]। अस्याभिनयः कल्याणस्य रामबागे संजात। पश्चात् नभोवाणीत' प्रसारितमेतत्।

## अन्वर्थको लालबहादुरोऽभूत्

इद रूपक १९६६ खीष्टाब्दे विरचितम्। एतस्मिन् पाकिस्तानं शमयितु नायकस्य योजना कार्यान्विता। लालबहादुरेण प्रोत्साहिता सेना प्राणपणेनायुध्यत।

## अपूर्व. शान्तिसग्रामः

नाटकस्यास्य वर्ण्यविषयः श्रीगान्धिनो लवणसत्याग्रहो वर्तते। पञ्चप्रवेशेषु विभक्तेऽस्मिन्नेकाङ्के नाट्यतत्त्वस्याभावः प्रतिभाति[4]।

## भूपो भिषक्त्वं गतः

"भूपो भिषक्त्व गत:" इति रूपकस्य प्रणेता पाण्डुरङ्गतनयो गणेशशास्त्रिलोण्ढेमहोदय' पुण्यपत्तनस्य महाविद्यालये कार्यरत आसीत्।

नाटकानुसार प्रोषितभर्तृका निर्मला रुग्णा वर्तते। अर्थाभावात्तस्याश्चिकित्सा न सभवति स्म। तस्या पुत्रश्चिन्तितः सन् चिकित्सायोजनाय

---

१ १९६७ ई० वर्षेऽमृतलताया प्रकाशितम्।

२ अमृतलताया १९६६ खीष्टाब्दे प्रकाशितम्।

३ अमृतलताया १९६६ खीष्टाब्दे प्रकाशितम्।

४. १९७२ ई० वर्षे विश्वसंस्कृते प्रकाशितम्।

राजमार्गे परिभ्रमति। प्रच्छन्नवेषः सुदर्शननामा राजा तयोर्महान् सहायको भवति, दारिद्र्यमेव तयोः सर्वथा निराकरोति। निर्मला बुभुक्षिता आसीन्न खलु रुग्णा। तस्या दौर्बल्यं चिरं भोजनदानेन चिकित्सितम्। राष्ट्रियभावनामुद्भावयितुं चारित्र्यविकासाय संस्कृतिसमुन्नत्यै चैवंविधनाटकस्याभिनय उपयुक्तोऽस्ति।

## गोपालशास्त्रिणो नाटकानि

काशीवास्तव्यो गोपालशास्त्री संस्कृतस्य श्रेष्ठप्रेमा उन्नायकश्चास्ति। विद्वानयं साहित्य-व्याकरणाचार्यन्यायतीर्थ पण्डितराज दर्शनकेसरीत्या-द्युपाधिभिरलङ्कृतः। स्वभावसरलोऽयं स्वातन्त्र्यसेनानी काशीविद्यापीठे (१९२१ ई०-१९४७ ई०) प्राध्यापकोऽभवत्। वृद्धावस्थायामपि चमोली-मण्डलान्तर्गत-ज्योतिर्मठस्थस्य बदरीनाथ-वेद-वेदाङ्ग-महा-विद्यालये प्रधानाचार्य आसीत्। शास्त्रिमहोदयस्य पाणिनीयनाटकम्, नारीजागरणम्, गोमहिमाभिनयश्चेति नाटकत्रयं सुप्रसिद्धम्।[1]

पाणिनीयनाटकेऽष्टाध्याय्याः सौविध्येन ज्ञानार्थं योजना प्रकटीकृता। पाणिनेरितिहास-प्रसङ्गे व्याकरणविकासस्यानुक्रमो रूपायितः।

संस्कृत-साहित्य-क्षेत्रे नारीजागरणविषयकं साहित्यं स्वल्पतर-मेवास्ति। तत्पूर्तये शास्त्रिमहोदयेन नारीजागरणाख्यं नाटकं प्रणीतम्। भारतीयसंस्कृतिपराणामनेकनारीणामत्र वर्णनं वर्तते।

गोमहिमाभिनयनाटके लोकस्याभ्युदयार्थं गवां माहात्म्यं सन्दर्शितम्।

## हर्षदर्शनम्

हर्षदर्शनस्य रचयिता डा० बलदेवसिंहवर्मा हिमाचलप्रदेशे शिमला-विश्वविद्यालयस्य प्राचार्यो विभागाध्यक्षश्च वर्तते।[2] एकाङ्केऽस्मिन् हर्षो स्वभ्रातृघातकं शशाङ्कं पराजयते। अत्र ह्वेनसाङ्गमिलनं यावत्कथा प्रथिता। हर्षस्यौदार्यम्, भारतस्य समृद्धिशालिता, सांस्कृतिकादर्शश्च

---

१. आद्ययोः प्रकाशनं चौखम्बा विद्याभवनतस्तृतीयस्य च विश्वविद्यालय-प्रकाशनतोऽभवत्।

२. १९६६ ख्रीष्टाब्दे विश्वसंस्कृते प्रकाशितम्।

हर्षेण सहामात्य-बाण ह्वेनसाङ्गादीना वार्तालापेन निदर्शिताः। भाषा सरला भावाश्च चरित्रोत्कर्षाधायका' सन्ति।

## यज्ञनारायणदीक्षितस्य नाटके[1]

यज्ञनारायणेन पद्मावती वरूथिनी चेति नाटकद्वय प्रकाशितम्। तत्र पद्मावतीति सप्ताङ्करूपकस्य वर्ण्यविषयो ब्रह्माण्डादिपुराणे वर्णित'। पद्मावत्या सह श्रीनिवासस्य विवाहो वर्तते। अनेकस्थलेष्वत्र रुचिराणि गीतानि लसन्ति।

## तीर्थयात्रा-प्रहसनम्[2]

तीर्थयात्राप्रहसनस्य प्रणेता श्रीरामकुबेरो मालवीय' काशीहिन्दू-विश्वविद्यालयात् साहित्याचार्यस्योपाधिमवाप्य तत्रैवाध्यापको नियुक्त.। पश्चात्स सेवाकार्यस्यान्तिमे भागे वाराणसेयसस्कृतविश्वविद्यालयस्य प्राचार्य' साहित्यविभागाध्यक्षश्चाभवत्। अस्य कवित्व चारु शोभते। १९७३ ई० वर्षेऽय दिवगत'।

तीर्थयात्रा-प्रहसनस्य प्रथमोऽभिनय' सस्कृतविश्वविद्यालपस्य स्थापनादिवसावसरे समायोजितः। अस्य पात्राणि स्वकीयदुराग्रहेण मौर्ख्येण च जनान् सपरिहास रञ्जयन्ति।

## विनायकबोकीलस्य नाटकानि

बोकिलस्य जन्म १८९० ई० वर्षे सतारामंडले मध्यमवर्गीये परिवारेऽभूत्। एम० ए० उपाधिविभूषितां विद्वानय महाराष्ट्रे शिक्षा-विभागस्य निरीक्षको नियुक्त'। पश्चादेष पुण्यपत्तने प्राध्यापकोऽभवत्। अस्य शिववैभवम्, श्रीकृष्णरुक्मिणीयम्, रमामाधवश्चैतन्नाटकत्रय सुप्रसिद्धम्।

शिववैभवे शिवाजीमहाराजस्य चारु चरितावली ग्रथिता। श्रीकृष्ण-रुक्मिणीये रुक्मिण्या सह श्रीकृष्णस्य विवाहो वर्णित.। रमामाधवे माधवरावपेशवा-प्रथमस्य पराक्रमो विशदीकृतः। स एवात्र चरित-नायकोऽस्ति। रमा तस्य पत्नी वर्तते। नाटकमिदमैतिहासिक राष्ट्रिय-भावनापरञ्च विलसति।

---

१ १९६७ ई० वर्षे आन्ध्रप्रदेशस्य गुण्टूरत प्रकाशितम्।

२ १९६६ ई० वर्षे सूर्योदयस्य हीरकजयन्ती-विशेषाङ्के प्रकाशितम्।

## नाट्य-पञ्चगव्यम्

नाट्यपञ्चगव्यस्य कवि पण्डितकुलमण्डनो डा० राजेन्द्रमिश्र' प्रयागविश्वविद्यालये सस्कृतव्याख्यातास्ति ।[1] वामनावतरण-महाकाव्येन तस्य प्रौढकाव्यसर्जनत्व सुप्रसिद्धम् ।

नाट्यपञ्चगव्यस्य पञ्चसु रूपकेषु प्रथम कविसम्मेलन वर्तते । अत्र कालिदासाश्वघोषादिभिरष्टकविभि' सूत्रधारसाहचार्येणानेका विषया वर्णिता ।

द्वितीये राधामाधवीये मथुरां प्रति प्रस्थिते कृष्णेन राधाया आश्वासन चर्चितम् ।

तृतीये फन्टूसचरितमिति भाणे हास्यं शिष्टतया प्रयुक्तम् । अत्र मातुलपुत्रिकाया वागुराया' प्रणयी विटस्थानीयो वर्तते ।

चतुर्थे नवरसप्रहसने प्रतीकपात्राणा नवरसाना साहचर्येण वीर-भद्रस्य रौद्रपाणिकन्यया विवाह सम्पादितः ।

पञ्चमे कचाभिशापे पुराणेतिहासप्रसिद्ध कचदेवयान्योः कथावस्तु प्रपञ्चितम् ।

## प्रबुद्ध-भारतम्

प्रबुद्धभारतस्य रचयिता रामकैलासपाण्डेय' प्रतिभाशाली कवि-रस्ति ।[2] तेन विरचितस्य भारतशतकस्य प्रौढि' समाहृता वर्तते ।

प्रबुद्धभारते पात्रद्वयमस्ति । पात्रे व्याख्यानात्मकसवादैर्देशस्य जागरणमधिकृत्य स्वकीयविचारान् प्रकटीकुरुत' । स्वीय पुराणेतिवृत्त प्रस्तुतीकृत्य भारतमाता लोकान् प्रोत्साहयति यद्द्य पाकिस्तानस्य कश्मीराधिग्रहणप्रयासस्य वैफल्येन मम क्रोडस्थली धन्या विलसति ।

## सत्सङ्ग-विजयम्

सत्सङ्गविजयस्य प्रणेतार नवनीतशास्त्रिणमधिकृत्य सूत्रधारः कथयति[3]—

---

१ १९७१ ई० वर्षे जौनपुरस्य द्रोणीपुरतः प्रकाशितम् ।

२ १९६६ खीष्टाब्दे सूर्योदयपत्रिकाया प्रकाशितम् ।

३. १९६५-६६ ई० वर्षयोः संविदि प्रकाशितम् ।

योऽसौ सुगन्धपुरवैजकुलप्रसूतो
राजादिरामतनयो रघुनाथशिष्यः ।
सत्तर्कशास्त्रपरिशीलनतत्परोऽस्ति
श्रीजीवनाश्रितजन' खलु मोहमथ्याम् ।।

सत्सङ्गविजय प्रतीक नाटक वर्तते । अत्र कुमति', व्यभिचार', दुराग्रह, दुष्टसिद्धान्त', मिथ्याभिशापश्च विपक्षीभूय सत्सङ्ग पराजेतु काङ्क्षन्ति, किन्तु स्वयमेव विजिता. सन्ति ।

## समीहित-समीक्षणम्

सुब्रह्मण्यशर्मण समीहितसमीक्षणे चतुर्षु दृश्येषु गुरोः शिष्याणा चित्रभानु माधव हरिदासादीना दुष्प्रवृत्तयो वर्णिता' ।[1]

## नाट्ये च दक्षा वयम्

अस्य प्रहसनस्य प्रणेता वा० का० क्षीरसागर' प्राध्यापकोऽस्ति[2] । एतदनुसार विक्रमोर्वशीयस्याभिनय' कस्याञ्चित् प्रतियोगितायां सूत्रधार प्रयोक्तु यतते । किन्तु पदे पदे पात्राणा दुर्व्यवहारैरतिखिन्नोऽसौ निर्वहणे कथयति—

"भगवति नाट्यदेवते ! रक्षात्मानमीदृशेभ्यो नटवरेभ्यो नाटकेभ्यश्च" इति ।

## उपनिषद्-रूपकाणि

उपनिषद्रूपकाणां रचयिता के० वी० पाण्डुरङ्गी बगलौर-महाविद्यालयस्य सस्कृत विभागाध्यक्षो वर्तते ।[3] अस्मिन् रूपकसग्रहे रूपकचतुष्टय प्रकाशितम् । एतेषा प्रसारण बंगलोर धारवाड नभोवाणीभ्यामभवत् ।

प्रथमे रूपके छान्दोग्योपनिषद' सत्यकामजाबालयो. कथा वर्तते । द्वितीय रूपक "जनकराजसभा" इत्यस्ति । तृतीयचतुर्थे क्रमशः 'क ब्रह्म

१. १९६७ ई० वर्षे अमृतलताया प्रकाशितम् ।

२. सूर्योदये ४३-४-५ अकयो प्रकाशितम् ।

३. १९६८ ई० वर्षे बगलौरत. प्रकाशितम् ।

ख ब्रह्म' 'क्व एष विज्ञानमयः पुरुष' इति च स्त'। पाण्डुरङ्गीप्रणीते तप फलमित्येकाङ्के कुमारसभवानुसार पार्वतीतपोवर्णनं विलसति।

## जवाहरलालनेहरु-विजयम्

जवाहरलालनेहरुविजयमिति नाटकस्य रचयिता साहित्य-व्याकरणायुर्वेदाचार्यो रमाकान्तमिश्रश्चम्पारण्ये नरकटियागजस्य सस्कृत-विद्यालये प्रधानाध्यापकोऽस्ति।[1] नाटकमिदमाधुनिकशैलीविशिष्ट वर्तते। प्रधानतोऽत्र जवाहरलालमस्य गौणतस्तस्य परिवारस्य च भारतस्य स्वतन्त्रतायै त्यागो वर्णित.। निर्वहणे भारत स्वतन्त्र भवति. नेहरुश्च प्रथमप्रधानमन्त्रिपदमलकरोति।

## विश्वनाथमिश्रस्य नाटकानि

आचार्यो विश्वनाथमिश्रः पूर्वोत्तरप्रदेशवास्तव्य' सुदीर्घकालतो बीकानेरस्य शार्दूलविद्यापीठे प्राचार्योऽस्ति। तेन प्रणीतानि नाटकानि विद्यापीठस्य वार्षिकोत्सवेषु प्रायशोऽभिनीतानि सन्ति। तस्य कलि-कौतुक, वामनविजय, कविसम्मेलनं च प्रसिद्धानि नाटकानि।

कलिकौतुकमाधुनिकशैलीविशिष्ट प्रतीकात्मकमेकाङ्कं वर्तते।[2] अत्र परीक्षितस्य राज्यकाले कले' कुकृत्यानि विशदीकृतानि।

वामनविजयाख्ये नाटके पुराणप्रसिद्धो वामनावतारो वर्णित.।[3]

कविसम्मेलन प्रहसनमेव। अत्र कवयो विविधभाषामिश्रपदावली-विशिष्ट पद्य परिहासात्मक श्रावयन्ति।[4]

## एकलव्य-गुरुदक्षिणम्

षडङ्केषु विभक्तस्यास्य नाटकस्य प्रणेता दुर्गाप्रसन्नदेवशर्मा बगवासी वर्तते।[5] अस्याभिनयः कालिकाताया' सस्कृत-साहित्यपरिषदो

---

१ १९६८ खीष्टाब्दे चौखम्बा-विद्याभवनत प्रकाशितम्।

२. श्री शार्दूलसस्कृतविद्यापीठ-पत्रिकाया (१९६६-६७) प्रकाशितम्।

३ भारत्या १९-११ अके प्रकाशितम्।

४ भारत्या २१. १ अके प्रकाशितम्।

५ १९७० ई० वर्षे सस्कृतपरिषदि प्रकाशितम्।

वार्षिकोत्सवे प्रयोजित । रूपकमिदद्रोणाचार्यस्य दैन्यविशिष्टवैषम्यादारभ्य एकलव्यस्याङ्गुष्ठदान यावन्महाभारतानुसारं प्रवर्तते ।

## मेघोदयम्

सुब्बूरामस्य मेघोदये विभाण्डपुत्रो बालब्रह्मचारी ऋष्यश्रृङ्ग' राज्ञो लोमपादस्यानुरोधेन तस्य राज्ये मेघान् वर्षयति । राजा स्वकन्या तस्मै समर्पयति ।[1]

## महागणपति-प्रादुर्भावम्

कर्नाटकवास्तव्यो हारीतोपनामा साम्बदीक्षितो महागणपतिप्रादुर्भावमिति नाटकस्य प्रणेता वर्तते ।[2] विद्वानसौ वेद व्याकरणादे' श्रौत-स्मार्त-कर्मकाण्डस्य च मर्मज्ञ' सुप्रसिद्ध एव । नित्यानन्दचरितमिति संस्कृतकाव्य तस्य कवित्व प्रकटयति । नाटकमिद तेन तरुणावस्थायां निष्पादितम् । पञ्चाङ्कनाटकमिद गणेशचतुर्दश्यामभिनययोग्यमस्ति । अत्र सिन्धुरनाम्नो दैत्यस्योत्पातै प्रपीडितान् देवान् रक्षितुं शिवस्य पुत्रो महागणपतिः पराक्रमते ।

## सुखमयगङ्गोपाध्यायस्य नाटके

सुखमयस्य पातिव्रत्य विद्यामन्दिर चेति प्रसिद्धमेकाङ्कद्वयम् । पातिव्रत्ये मनसादेव्या पूजनप्रवर्तिका कथा विलसति । बेहुला स्वकीय-पातिव्रत्यबलेन देवान् प्रसाद्य मृत स्वामिन पुनर्जीवयति । कौटुम्बिक-नाटकमिदमादर्श पर मनोहरमेव ।

विद्यामन्दिरे भारतीय-विद्यालयाना दुरवस्था चर्चिता । प्रधान-तस्तत्र छात्राणा दुष्प्रवृत्तय' सकेतिता' सन्ति ।

## देवी-प्रशस्ति-नाटकम्

काव्यव्याकरणस्मृतितीर्थ-विद्याविभूषणो बङ्गदेशस्य वर्धमान-मण्डले पराणपुरग्रामे समुत्पन्न. पण्डितो ललितमोहनो देवी-प्रशस्ति-

---

१ १९७० खीष्टाब्दे संस्कृतप्रतिभाया. द्वितीयविलासे प्रकाशितम् ।

२ १९७४ ई० वर्षे प्रकाशितम् ।

नाटकस्य प्रणेता।[1] अत्र राज्यच्युतस्य राज्ञ सुरथस्य विरक्तस्य समाधिनाम्नो वैश्यस्य च देव्या प्रसादेनाभ्युदयकथा प्रस्तुता।

## हकीकतराय-नाटकम्

एकाङ्कस्य हकीकतरायनाटस्य प्रणेता हजारीलालशर्मा हरियाणा-प्रदेशे लज्जारामसंस्कृतमहाविद्यालस्य प्रधानाचार्योऽस्ति।[2] नाटकेऽस्मिन् वीरबालकस्य हकीकतरायस्यादर्शचरित चित्रितम्। धर्मान्धाभ्या काजीन्यायाधीशाभ्या मृत्युङ्गमितोऽसौ वीर। तत्सर्व विज्ञापित सम्राट् शाहजहाँ काजीन्यायाधीशयो रावीजले समाधि प्रापितवान्। सम्राड् आत्मान हकीकतरायस्थानीय घोषयित्वा हकीकतस्य पित्रोः सपुत्रता विहितवान्।

## विवेकानन्द-विजयम्

विवेकानन्दविजयस्य प्रणेता श्रीधरभास्कराचार्यवर्णेकर' संस्कृत-वाग्धाराप्रवाहक· सुप्रसिद्ध एव। नितरा कर्मठोऽय मनीषी नागपुर-विश्वविद्यालयस्य संस्कृतविभागाध्यक्षः प्राचार्यश्चास्ति। डी० लिट्० उपाधिविभूषितोऽय मनीषी विविधकाव्यविधासु रचनाभिः सुरभारतीं समृध्यति।

चरितात्मकेऽस्मिन् विवेकानन्दविजयाख्ये दशाङ्कनाटके भाषायाः सारल्य नाट्योचित वर्तते। किन्तु बहुत्रातिदीर्घा संवादा व्याख्यान वत्प्रतिभान्ति। राष्ट्रियचरित्रनिर्माणे विवेकानन्दविजयाभिनयस्य सामर्थ्यमन्यूनमेवास्ति।

## भवालकर-वनमालाया नाटकानि

सागर-विश्वविद्यालयस्य प्रवाचिका श्रीमती डा० वनमाला भवालकर-महोदया मराठीभाषया संस्कृतभाषया च भारती भण्डार सुष्ठु सम्भृतवती। सा न केवलं लेखिका, अपितु स्वयमेव प्रयोग-निर्देशिका, संगीतज्ञाभिनेत्री च सुप्रवीणा। उत्तरप्रदेशशासनेन पुरस्कृते पाददण्ड-मिति नाटके नायकः सुधीरः युद्धे एकपादहीनः पूर्वत एव प्रणयानुबद्धा

---

१. प्रणवपारिजाते १४.२, १६ १ अङ्कयो प्रकाशितम्।

२. अस्य प्रकाशनं लेखकेन स्वय कृतम्।

ललितामुद्वाह्य पाददण्ड सजीव लभते। रामवनगमनमिति सगीतिकायां विविधतालरागादिनिष्पन्नगीतैः यथानाम रामस्यवन-गमनकथा वर्णिता। पार्वतीपरमेश्वरीयमिति सगीतिकायां महादेवस्योद्वाहोऽभिनेयता प्रणीतम्।[1]

## इन्दिरा विजयम्

वेङ्कटरत्नप्रणीतस्यास्य नाटकस्य कथा मुजीबस्य बन्धनकालादारभ्य बागलादेशस्योत्पत्तिकालपर्यन्त प्रवर्तते। तत्र पदे पदे इन्दिराया औदार्यादिगुणा' पाकिस्तानशासकाना दुष्प्रवृत्तयश्च वर्णिता'।

## बंगलादेश-विजयम्

बंगलादेशविजयस्य रचयिता उत्तरप्रदेशस्य पिथौरागढमण्डले सिगौली-ग्राम-वासी पद्मशास्त्री सम्प्रति राजस्थानस्य भीलवाडामडले राजकीयोत्तरमध्यविद्यालयस्य सस्कृताध्यापको वर्तते।[2]

यद्यपि नाम्नैवास्य कथानक स्पष्ट तथापि प्रधानामात्येनाहमदेन साक नारदेन्द्रादीना वार्तालाप, इन्दिरया च नारदादि प्रति माल्यार्पणमित्यादिप्रसगास्तत्र सविशेषमुपन्यस्ता। तेन खलु लेखकस्य हृदिस्थ रामणीयक प्रकटीभवति।

## वरूथिनी-प्रवरम्

विजयपट्टनस्य ए० वी० एस० कलामहाविद्यालये व्याख्यातृपदे नियुक्तो वेङ्कुलसुब्रह्मण्यशास्त्री वरूथिनीप्रवरमिति नाटकस्य प्रणेता।[3] एकाङ्केऽस्मिन् "प्रवर" चामत्कारिकेणौषधिविशेषप्रयोगेण यथेच्छस्थान हिमालय क्षणात्नन्तरमेवोपगच्छति। तस्य लेपः कुत्रापि विलुप्त। तत्र दैवादागताप्सरा वरूथिनी त प्रत्यासक्ता। ता तिरस्कृत्य पलायितवानसौ। तस्य वियोगे रुदत्योऽप्सरस समाश्वासनाय समागताभिः सखिभिर्मायाप्रवरो निर्मित'। तेन सा परिणीता। तयो समागमेन मनुस्वारोचिरजायत।

---

१. एतानि सर्वाणि नाटकानि सागर वि वि सस्कृत-परिषद प्रकाशितानि।

२. १९७३ ई० वर्षे प्रतिभाया १० २ अङ्के प्रकाशितम्।

३ १९७४ खीष्टाब्दे वाल्टेयरनगरे प्रकाशितम्।

## प्रेम-पीयूषम्

प्रेमपीयूषस्य प्रणेता डा० राधावल्लभत्रिपाठी सम्प्रति सागर-विश्वविद्यालये संस्कृतविभागस्य व्याख्यातृपदे सम्प्रतिष्ठितः ।[1] हिन्दी-संस्कृतरचनाभिः स बहुशः पुरस्कृतः ।

सप्ताङ्केऽस्मिन् प्रेमपीयूषनाटके महाकविभवभूतेः जीवनचरितं समुपनिबद्धम् । तत्र ललितादित्ययशोवर्मणोर्विग्रहो यशोवर्मणः पराजयश्चैतिहासिकी घटना कलात्मकसंविधानैः सम्पृक्ता सम्यक् प्रपञ्चिता ।

## भारतमस्ति भारतम्

श्रीहरदेवोपाध्यायस्य भारतमस्ति भारतमिति रूपकानुसारं याहियाखानस्य सैनिकैः प्रपीडितं बंगलादेशस्य कञ्चित्परिवारं कश्चिद्भारतीयो भारतमानयति । स तेषां शरण्यो भवति ।[2]

## च्यवनभार्गवीयम्

अहमदनगरस्य विदुषः कविराजस्य डा० दे० ख० खरवण्डीकरस्य प्रवेशपञ्चके विभक्तेऽस्मिँल्लघुनाटके प्रस्तावना नास्ति । कथा मूलतः शतपथब्राह्मणाश्रिता प्रवर्तते । १९७४ ई० वर्षे नाटकमिदं लेखकेनैव प्रकाशितम् ।

## अधीरकुमारसरकारस्य नाटके

मेदिनीपुरस्थोऽधीरकुमारसरकारः कचदेवयानीयम्, पाशुपतं चेति नाटकद्वयं विरचितवान् । तत्र प्रथमे देवासुरसंग्रामप्रसंगे समागता कथा वर्तते ।[3] द्वितीयं किरातार्जुनीयमनुसरति । तदनुसारमर्जुनः शिवात् पाशुपतास्त्रं लभते ।[4]

## यमनचिकेतसीयम्

जगदीशप्रसादसेमवालस्यास्मिँल्लघुनाटके आध्यात्मिकं जीवनदर्शनं

---

१ १९७४ वर्षे सागर वि० संस्कृतपरिषदा प्रकाशितम् ।

२ १९७२ संस्कृतप्रचारक-पत्रिकायां प्रकाशितम् ।

३ पाटलश्रिया १९७३ ई० वर्षे प्रकाशितम् ।

४ पाटलश्रिया १९७३ ई० वर्षे प्रकाशितम् ।

सम्यग् विश्लेषितम् ।[१] कथा मूलतः कठोपनिषदमुपजीवति । तत्र कतिपय-संविधानानि कविनाविष्कृतानि ।

## परमसन्धिक्षणे दैवपुरुषकारौ

एम० ए० उपाधिधारी चण्डीदासनन्दशर्मा "परमसन्धिक्षणे दैव-पुरुषकारौ" इति रूपके रामरावणयोः पुरुषकारदैवयोः, कर्णार्जुनयोः, तुलसीदासतच्छ्वशुरयोश्च सवादा विलसन्ति । निर्वहणे दैवपुरुषकारौ नारायणसदन गच्छत । नारायणस्तावाश्लिष्य कथयति "नास्ति पृथक् प्रतीतिरावयो" इति । नाटक नितान्त रोचक निष्पन्नम् ।

## सुधाभोजनम्

सुधाभोजनस्य प्रणेता डा० अशोककुमारकालिया सम्प्रति लखनऊ विश्वविद्यालयस्य व्याख्याता नियुक्तः ।[२] सुधाभोजने देवराजस्य शक्रस्य चतसृणा कन्यानां स्वकीयश्रेष्ठताविषयकविवादस्तस्य निर्णयश्च वर्तते । नाटके गीतिप्रवणता नाट्योचितैः अस्ति । कृतावस्था कवे काचिन्नूतना नाट्यसरणिरभिनन्दनीया ।

## कः श्रेयान्

क श्रेयानिति नाटकस्य प्रणेता गजेन्द्रशकरलालशकरपण्ड्या गुर्जर-देशीयो हास्यकविरस्ति । प्रहसनेऽस्मिन् धूर्तपुरपाठशालाया आचार्य. शौनक. सामाजिकवैषम्य भ्रष्टाचार च सविनोद प्रपञ्चयति ।[३]

## नचिकेतश्चरितम्

नचिकेतश्चरितमित्येकाङ्कस्य कवयित्री ब्रह्मचारिणी वेलादेवी एम० ए०—तर्क-वेदान्त व्याकरणतीर्थोपाधिभि' समलकृता वर्तते । नाटकस्य कथावस्तु कठोपनिषदमुपजीवति । अभिनवसविधानै. सवलितमिद बालेभ्यः साधु रोचते ।[४]

---

१ प्रणवपारिजाते १६ ८-९ अङ्कयो. प्रकाशितम् ।

२. १९७४ ई० वर्षे लखनऊपुरीतः "अखिलभारतीयसंस्कृतपरिषदि" प्रकाशितम् ।

३. १९७६ ई० वर्षे सविदि प्रकाशितम्

४. प्रणवपारिजातस्य १९७६ वर्षस्याङ्केषु प्रकाशितम् ।

## रेवाप्रसादद्विवेदिनो नाटके

डा० रेवाप्रसादद्विवेदिनो जन्म १९३५ ई० वर्षे मध्यप्रदेशस्य नर्मदातटे नादनेरनाम्नि ग्रामेऽभूत्। बाल्ये संस्कृतज्ञेन पित्रा शिक्षितोऽयं काशीहिन्दूविश्वविद्यालयस्य साहित्याचार्योपाधिमर्जित्वा जबलपुरविश्वविद्यालयस्य डी० लिट्० इत्युपाधिं शोधनिबन्धेनावाप्तवान्। सीताचरितमहाकाव्यस्य प्रणेतायं मनीषी सम्प्रति विविधकाव्यादिरचनाभिः सुरभारतीं समृध्यन् काशीहिन्दुविश्वविद्यालये संस्कृतसाहित्यविभागाध्यक्षपदे प्रतिष्ठितः। द्विवेदिना काङ्ग्रेसपराभवं यूथिका चेति नाटकद्वयमद्यावधि विरचितम्।

काङ्ग्रेसपराभवस्य कथावस्तु प्रयागोच्चन्यायालयेन भूतपूर्वप्रधानमन्त्रीन्दिराया निर्वाचनस्य निरसनात् प्रारभ्यते। निर्णयानुसारमिन्दिरया पदं त्याज्यमासीत्। किन्तु कालान्तरे सौभाग्यवशात् सर्वोच्चन्यायालयेन प्रयागीयनिर्णयो निरस्तः। इन्दिराया कूटनीत्योदग्रीभूता क्रान्तिपरा नेतारः इन्दिराशासनं समापयितुं कृतप्रयत्ना अभवन्। तेषां दमनाय सा आपातस्थित्यासंख्यकान् निरपराधजनान् बन्दीकारितवती। किन्तु १९७७ ई० वर्षस्य केन्द्रीयनिर्वाचने तस्याः काङ्ग्रेसदलं न्यक्कृतम्। अनेन प्रकारेण राजमदान्विताविमृश्यकारिता दुष्परिणमिता।

डा० द्विवेदिनो "यूथिका" नाटिका शेक्सपीयरस्य रोमियोजुलियटमिति नाटकमुपजीवति। अस्याः प्रणयनं प्रकाशनञ्च १९७६ ई० वर्षेऽभवताम्। अत्र भाषाभावयोः सामञ्जस्यं सर्वथा नाट्योचितं वर्तते।



# शब्दानुक्रमणिका